

राष्ट्रिय
संस्कृत
संस्थानम्
नवदेहली

गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ ग्रन्थमाला

॥ ६४ ॥

अथ

लक्ष्मणमाणिक्यदेव-प्रणीतम्

# विख्यातविजयम्

नाटकम्

सम्पादकः
डॉ० रामकिशोर झा



**Rashtriya Sanskrit Sansthan**
(DEEMED UNIVERSITY)
*(Under the auspices of the Ministry of Human Resources Development, Govt. of India)*
**New Delhi**



**Ganganatha Jha Campus**
**TEXT SERIES**

**No. 64**

# VIKHYĀTAVIJAYAM
## NĀTAKAM



*General Editor*
**Dr. Goparaju Rama**

*Edited by*
**Dr. Ram Kishor Jha**

ALLAHABAD
2005

प्रकाशक :

**डॉ० गोपराजू रामा**

प्राचार्य :

राष्ट्रियसंस्कृतसंस्थानम् (मानित-विश्वविद्यालय:)

गङ्गानाथझा-परिसर:

चन्द्रशेखर-आज़ादोद्यानम्

इलाहाबाद-2

● प्रथमं संस्करणम् : 500 प्रतय:



● प्रकाशन-वर्षम् : 2005

मूल्यम्

878-90-83135-87-5

मुद्रण :

**प्रयागराज कम्प्यूटर्स**

इलाहावाद-211 002

लक्ष्मणमाणिक्यदेव-प्रणीतम्

# विख्यातविजयम्

नाटकम्



सम्पादकः
डॉ० रामकिशोर झा

गङ्गानाथझा-परिसरः
चन्द्रशेखर आज़ाद पार्क
प्रयाग-211002
2005

राष्ट्रियसंस्कृतसंस्थानम्
(मानित-विश्वविद्यालयः)
(केन्द्रीयमानवसंसाधनविकासमन्त्रालयस्याङ्गभूतम्)
नवदेहली

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

●

प्रधानसम्पादकः
डॉ० गोपराजू रामा

●

चतुःषष्टितमं प्रसूनम्

# विख्यातविजयम्

नाटकम्

●

सम्पादकः
डॉ० रामकिशोर झा

●

गङ्गानाथझा परिसरः
चन्द्रशेखर आज़ाद पार्क
इलाहाबाद-211002
2005

# Forword

Our Institution after the coversion of its Pravara (प्रवर) from the Ganganatha Jha Kendriya Sanskrit Vidyapeetha to Rashtriya Sanskrit Samsthan (Deemed University) Ganganatha Jha Campus is bringing out the first text, a drama of the 17th century written by Srimallakshmana Manikyadeva who hailed from Bengal. His drama named after the VIKHYATAVIJAYAM dealt with "the End of Karna" in the battle field of Mahabharata. The theme was dealt with on the lines of dramaturgy.

Karna is a famous hero in the Mahabharata. In valour he is *since quo none*. In the battle field when he was face to face with Arjuna, Arjuna was very much baffled and sounds Krishna that

एष कर्णो रणे भाति मध्याह्न इव भास्करः।
निवर्तय रथं कृष्ण जीवन् भद्राणि पश्यति॥

Such was the gravity of his valour. It can be said that he was a poor fellow. Nine personalities were the causes behind his death. 1. Brahmana. 2. Parasuram. 3. Indra. 4. Kunti. 5. Bhisma, 6. Salya, 7. Bhudevi. 8. Krishna and 9. Arjuna. He was cursed by Brahmana, Parasuram, Indra and Bhudevi. The secret of his birth was known to four personalities in the Mahabharata—Kunti. Krishna. Vyas and Bhishm. Kunti and Bhisma knowing fully well the secret of his birth were silent althrough. Had Kunti revealed the secret of his birth Yudhisthira never should have come forward for the battle. Bhisma was silent because he was siding the Kouravas. Karna bears another name 'Vasushena'. Kunti left her son Karna floating in the river embedded him in a box filled with gold and jewels. Karna was located with that box alongwith those precious materials down stream. Vasu means "Gold". Hence his name वसुषेण।

Out of 18 days of the Mahabharata war Karna was in the battle field for

seven days after Bhisma relinquishing on the 10th day. Karna fought under the leadership of Drona for five days and two days under his own leadership.

The story here is adopted under the pattern of Bhattanarayana's Venisamhara. The dialogues in the drama are very much amusing. The whole credit goes to Dr. Ram Kishore Jha of our Vidyapeetha for bringing the drama to light. It was in the pipe line since several years. Everything has its day and it is the day of this drama that is placed in the hands of scholars.

The labour of Dr. Ram Kishore Jha in editing this work at last became fruitful. Each and every aspect of the drama is clearly dealt with in the introduction by Jha. I very much appreciate him and wish him to see through such other ventures in future also.

**Goparaju Rama**

(Principal)

राष्ट्रपति-सम्मानित
**आचार्य चण्डिकाप्रसाद शुक्ल**, डी.लिट्.
भू.पू. प्रोफेसर एवं अध्यक्ष (संस्कृत विभाग)
इलाहाबाद विश्वविद्यालय

आवासः
72-ए, दरभंगा कम्पाउण्ड
इलाहाबाद - 211 011
दूरभाष- 0532 : 2461912
~~2466628~~

ॐ

## - शुभाशंसनम् -

दिनांक : 28 : 02 : 05

स्वस्ति। साहित्यशास्त्रमर्मज्ञविदुषा डा० रामकिशोरझामहोदयेन खिष्टाब्दस्य सप्तदशशताब्द्यां लब्धजन्मनो बङ्गकवेः श्रीमल्लक्ष्मण-माणिक्यदेवस्य "विख्यातविजय"नामनाटकस्य सम्पादनेन वाग्देवतायाश्चरणयो नूतनं सुरभितमभेकं प्रसूनं योजितम्। नाटकमिदं मातृकारूपेण बङ्गलिप्यामासीत्। श्रीझामहोदयेन नागराक्षरेषु विहितं लिप्यन्तरणं सर्वथा सहृदयधुरीणैरभिनन्दनीयम्। भट्टनारायणस्य 'वेणीसंहार'सरणि-माश्रित्य प्रणीतेऽस्मिन्नाटके महाभारतस्य कर्णपर्वणि कर्णनिधनस्ये-तिवृत्तं नाट्यशैल्यां पल्लवितं विद्यते। अत्रत्यानां पात्राणां कथोपकथने संवादसंप्रेषणीयता विलक्षणैव। सुविस्तृतभूमिकासंवलितं सम्पादनमिदं वैदुष्यपूर्णमत एव विद्वन्मनस्तोषाय नूनं कल्पयि-ष्यतीति विश्वसन् विद्वद्वर्यममुमाशीराशीभिस्सभाजयामि —

—चण्डिकाप्रसादः शुक्लः

# प्राक्कथनम्

''इदमन्धन्तमः कृत्स्नं जायते भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते[1]॥'' इति।

× × ×

''द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।
शब्द-ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति[2]॥ इति च।

प्रायस्सुविदितमेवैतद्यदखिलेऽस्मिन् ब्रह्माण्डमण्डले धन्यो वदान्योऽस्माकं भारतदेशः, यत्रास्माकं ऋषिमहर्षयः स्वतपःप्रभावात्साक्षात्कृदात्मतत्त्वधर्माणश्शब्दब्रह्मणोऽप्रतिमं दिव्य-प्रकाशमवापुः। फलतस्तैरारचितानि निखिलानि वाङ्मयानि शब्दब्रह्मणः दिव्यप्रकाशै-र्देदीप्यमानानि पुरुषार्थचतुष्टयसंसाधकानि गभीरगवेषणापरकान्यत एव तानि ऋष्यर्णो-पयिकान्येवेति नाविदितं मतिमताम्। तत्र सत्सु वेद-दर्शन-पुराणेतिहासादिसु विविधशास्त्रेपु दृश्य-श्रव्यभेदान्नाट्य[3]-काव्यादिरूपेषु संगुम्फितं साहित्यशास्त्रमप्यन्यतमम्। यतो हि वेद-दर्शन-पुराणेतिहासादिसु शास्त्रेषु पुरुषार्थचतुष्टये परिगणितस्य मोक्षरूपस्य परमपुरुषार्थस्यावाप्तिहेतवे धृति-शम-दमादिरूपाः विविधाः क्लिष्टोपायास्तत्सोपानकल्पाः निर्व्यूढं विवेचितास्सन्ति किन्तु सकलशास्त्राणां निष्यन्दभूतेऽस्मिन् साहित्य-शास्त्रेऽवगाहेनेन हेलयैव हस्तामलकवदमन्दानन्दसन्दोहरूपस्य शब्दब्रह्मापरपर्यायस्य परब्रह्मणोऽवाप्तिर्जायत इति प्रकारान्तरेण निम्नपद्येनापि स्फुटीभवति।

'शास्त्रे दुर्ग्रहोऽप्यर्थः स्वदते काव्यसूक्तिषु।
हृद्यं करगतं रत्नं दारुणं फणिमूर्द्धनि॥''

---

1. काव्यादर्शः, 1/4
2. मैत्रायण्युपनिषत् 6/22
3. अनुभाव-विभावनां वर्णना काव्यमुच्यते।
   तेषामेव प्रयोगस्तु नाट्यमित्युच्यते बुधैः॥
   [भरतमुनेः नाट्यशास्त्रम्]

वस्तुतः षट्संख्याकेषु षाट्कौशिकलौकिकरसेषु नवसंख्याकेष्वलौकिकरसेषु च तस्यैव परब्रह्मणोऽवस्थानमिति वेदपुराणोपनिषद्ग्रन्था आमनन्ति।[1] तस्मात् सर्वं खल्विदं ब्रह्म सर्वं रसमयं जगदित्युपनिषद्-वाक्यानुसारमन्वय-व्यतिरेकाभ्यां कविकर्मण्यपि रसादिरूपेषु काव्यात्मतत्त्वेषु तद्ब्रह्मणोऽस्थानम्, रसास्वादकाले च तदवाप्तिरिति श्रीमदभिनव-गुप्तपादाचार्यवर्यैरप्यङ्गीकृता स्वविहिते प्रत्यभिज्ञादर्शनसम्मते रसनिष्पत्ति-व्याख्यानावसरे। एतावता यन्नैवं तन्नैवमिति रीत्या तस्य परब्रह्मणः रसावच्छिन्नत्वेन व्यापकत्वं कविकर्मणि तदवस्थानञ्च स्वात्मप्रदीपाभिधानस्य वेदान्तग्रन्थस्यामुना पद्येन स्फुटीभवति—

"या स्थायिभावरतिरेव निमित्तभेदा-
च्छृङ्गार-हास्य-नवनाट्यरसीभवन्ति।
सामाजिकान् सहृदयान्नटनायकादी-
नास्वादयेत्सहजपूर्णरसोऽस्मि सोऽहम्॥"[2]

तस्माद् दृश्य-श्रव्योभयविधसाहित्याम्भोधाववगाहनेन तत्तद्रसानां विभावादिचर्वणा-वधिस्सुखपूर्वकं तद्ब्रह्मणोऽवाप्तिर्जायते। फलतश्शास्त्रान्तरापेक्षया काव्यनाटकादीनां ग्रन्थानां व्यतिरेकित्वमप्यध्यवसीयते। प्रसङ्गेऽस्मिन् हनुमन्नाटकस्य पद्यमिदं निदर्शनभूतम्, तद्यथा—

"या विभूतिर्दशग्रीवे शिरःच्छेदेऽपि शङ्करात्।
दर्शनाद्रामदेवस्य सा विभूतिर्विभीषणे॥"[3]

नाटकप्रणयनपरम्परायां महाकविभास-सौमिल्ल-कालिदास-भवभूति-विशाखदत्त-शूद्रकप्रभृतयो नाटककारास्सन्ति सुप्रथिताः, किन्तु तस्यामेव परम्परायां सप्तदशशताब्दयां लब्धजन्मनो श्रीमल्लक्ष्मणमाणिक्यदेवस्य 'विख्यातविजया'ख्यं नाटकमिदमद्यावधि अप्रकाशितमेव। कालान्तरे ग्रन्थरत्नमिदं कालकवलितं न भवेदेतदर्थं तत्संरक्षणधिया

---

1. (क) यो वः शिवतमो रसः, ऋग्वेदः, 10-9-2
   (ख) दधानः कलशे रसम्, तदेव, 8-3-20
   (ग) रसो वै सः, तैत्तिरीयोपनिषद् 3/7
   (घ) पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः। भगवद्गीता, 15/13.
2. प्रतापरुद्रीयम्, सम्पादकः डा० वी० राघवन् (भूमिकाभागः द्रष्टव्यः)
3. हनुमन्नाटकम्, 7/14

एतद्विद्यापीठस्य प्राचार्यमहाशयानां सम्पादनस्वीकृतिमासाद्यैष जनोऽत्र प्रवृत्तो जातः।

नाटकमिदं बङ्गाक्षरेषु मातृकारूपे एतद्विद्यापीठीये पाण्डुलिपि-संग्रहालये सुरक्षितं विद्यते। अतः प्रथमन्तावदेतन्नाटकं बङ्गाक्षरेभ्यः नागराक्षरेषु मया लिप्यन्तरितम्। तदनु विविधमातृकागारेभ्यः लब्धयोस्तदतिरिक्तयोः मातृकयोस्साहाय्येन समीचीनपाठ-निर्धारण-पुरस्सरं तत्सम्पादनकार्यं कृतम्।

प्रायेणैतदवलोक्यते यद् भारतीयसंस्कृतिसंरक्षणतत्पराः ऋषिकल्पा अत्रत्याः ग्रन्थकाराः लोकोपकारेषु व्यापृतास्समवर्तन्त। फलत आत्मश्लाघाविमुखाः सन्तस्ते सौशील्येन प्रश्रयाधिक्येन वा स्वरचनासु स्वकीयं परिचयादिकमपि नोल्लिखन्तिस्म। तस्मात्कारणाद् विमर्शका अन्तःसाक्ष्याभावे कतिपयैर्बाह्यसाक्ष्यैरेव तत्परिचयादिकं कार्यं निष्पादयन्ति। कार्येऽस्मिन् ते महत्काठिन्यमप्यनुभवन्ति च। ग्रन्थेषु तत्कर्त्तृणां परिचयाभावस्यैका सुदीर्घपरम्परा वर्त्तते संस्कृतवाङ्मये। एष नाटककारोऽपि तस्यामेव परम्परायामापतति। कविरयं प्रकृतनाटकस्य पुष्पिकासु दिङ्मात्रं स्वस्याभिधानस्योल्लेखमकार्षीत् किन्त्वेत-न्नाटकस्य सम्पादनकर्मणि व्यापृतेन मया कतिपयैरैतिह्यविद्भिर्निर्धारितैर्बाह्यसाक्ष्यैरपि कवेरस्य पुष्कलं परिचयादिकं समासादितम्, तद्यथा—

पूर्वबङ्गालप्रान्तस्य इदानीन्तनस्य स्वतन्त्रबङ्गलादेशस्य राजधान्याः **ढाकानगर्याः** पूर्वदिग्भागे प्रवहमानायाः **'मेघना'** नद्याः पूर्ववर्तिनि तटीयभूभागे तिप्पेरा [**त्रिपुरा**] राज्यस्य च पश्चिमायान्दिशि **'नोआखाली'** मण्डलं विद्यते। तन्मण्डलान्तर्गतं **'भुलुआ** नामधेयं जनपदं कविरयं स्वजन्मनाऽलञ्चकार। तत्रात्यानां **शूर**नृपानां त्रिशताब्दीं यावदेका अविच्छिन्ना सुदीर्घपरम्परा पौराणिकेष्वैतिह्यग्रन्थेषु समासाद्यते। षोडशशताब्द्यां वत्सगोत्रोत्पन्नः मिथिलायाः क्षत्रिय-राजकुमारः **विश्वम्भरराय**ः एतस्य शूरपरिवारस्याधिष्ठाता आसीदिति डा० दिनेशचन्द्रभट्टाचार्यमहाशयः 'द इण्डियन हिस्टोरिकल क्वाटरली' नामधेये जर्नलमध्ये 'द भुलुआ-चीफ्स एण्ड देअर लिटरेरी वर्क्स' नामधेये गवेषणापरके स्वकीये निबन्धे स्पष्टयति[1]।

स हि विश्वम्भररायः 'बख्तियारखिलजी' नामकस्य मुगलसेनापतेः मिथिलाया-माक्रमणकाले द्विशतसंख्याकैः पदातिभिः, पौरोहित्य-निष्णातैः कतिपयैराचार्यैः शताधिकोन-पञ्चाशत्संख्याकैर्नाविकैश्च साकं मिथिलातः पूर्वबङ्गप्रान्तमाजगाम। तत्र **'चित्तगंज'** नामके स्थाने एकस्मिन् देवालये **चन्द्रनाथाभिधस्य** भगवतः शिवस्य दर्शनमकार्षीत्। अथ च ततः

---

1. The Indian historical quaterly, Vol.-14, p. 137-46

प्रत्यागमनकाले 'भुलुआ'नगरे 'वाराही'देव्याः दिव्यमेकं विग्रहं वीक्ष्य तत्स्थानं पवित्रमिति मत्वा तत्रैव स्वराजधानीं स्थापितवान्। गच्छता कालेन **विश्वररायस्यै**तत्कुलं बङ्गीय-कायस्थकुलेऽन्तर्निहितं जातम् किन्तु साम्प्रतमपि 'भुलुआ'नगरे शूरपरिवाराणामनुजन्मानः **आदिशूरस्य** रक्तत्वेन आत्मनः परिचयं ददतीति प्रसिद्धपाण्डित्यस्य डा० दिनेशचन्द्र-भट्टाचार्यमहाशयस्याभिसन्धिः।

ऐतिह्यग्रन्थानामनुशीलनेनैतत् सुस्पष्टं भवति यत् प्राचीनकाले निखिलबङ्गप्रान्तः बिहारप्रान्तस्य पूर्ववर्तिभूभागश्च सप्तसंख्याकेषु क्षेत्रीयभूभागेषु विभक्तः आसीत्। तत्तद्भूभागानां तदानीं स्वतन्त्रशासकाः आहोस्वित् अर्द्धस्वतन्त्रशासकाश्च अवर्त्तन्त। तत्तद्भूभागानां नामानि अद्यस्तनानि सन्ति—

1. हिरण्यपर्वत-क्षेत्रम् [मुंगेरमण्डलान्तर्गतम्।]
2. चम्पा-क्षेत्रम् [भागलपुरमण्डलान्तर्गतम्।]
3. काजङ्गल-क्षेत्रम् [राजमहलस्य चतुर्षु भागेषु अभिव्याप्तम्।]
4. पौण्ड्रवर्द्धन-क्षेत्रम् [उत्तरबङ्गालतः करतोयानदीपर्यन्तम्।]
5. समताता[1]-क्षेत्रम् [हुगलीनदीतः त्रिपुरापर्यन्तम्।]
6. ताम्रलिपि-क्षेत्रम् [मिदनापुरमण्डलादारभ्य चतुर्विंशति-परगनापर्यन्तम्।]
7. कर्णसुवर्ण-क्षेत्रम् [नदिया-वीरभूम-मुर्शिदाबादमण्डलमपर्यन्तम्।]

उपर्युक्तेषु सप्तसु क्षेत्रेषु समताता-क्षेत्रस्याधिपतिः खड्गसाम्राज्यस्याधिष्ठाता '**देवखड्गा**'भिधानः नृपतिरासीदिति ख्रिष्टाब्दस्य सप्तमशताब्द्याः अन्तिमे चरणे भारत-भ्रमणार्थं समागतः चीनदेशीयः पर्यटकः सेंगच्वीमहादयोऽपि स्वीकरोति[2]। देवखड्गस्यैव

---

1. **Samtata** is mentioned along with Davak in Samudragupta's (q. V. Allahabad pillar inscription as one of the pratyant (i.e. frontier) states the king of which gratified as imperious command by paying all kinds taxes obeying his orders and coming to perform abeisance. It has been edentified with the part of eastern. Bengal bordering the sea. Its capital was probably **Bad-Kamta** near comilla, now is east-Pakistan.
A dictionary of of Indian History.
by Schchidanand Bhattacharya P. 747.

2. The inscription of the **Khadgas** have been so far found in the Dacca and Comilla districts in Bengal. The possible identification of Rājabhatta, King of **Samatata** at the time of seng-chi's visit to Inida C. 650-700.
See. The Dynestic History of Northern India, Vol.-1, pp. 274.

शासनकाले पूर्वबङ्गप्रान्तस्योत्तरराढे कर्णसुवर्णक्षेत्रे आदिशूरस्य '**जयन्त**'स्य प्रादुर्भावो जातः। यः खलु '**माधवशूर**'स्य पुत्रः '**कविशूर**'स्य च पौत्रः आसीत्। आदिशूरोऽसौ '**जयन्तः**' स्वल्पेनैव समयेन पौण्ड्रवर्द्धनक्षेत्रं विजित्य 654 शकाब्दे एवमेव 732 ख्रिष्टाब्दे तत्र स्वराजधानीं स्थापितवान्।[1] खड्गवंशीयदेवखड्गस्य पुत्रः राजभट्टाभिधानः आसीत्। ऐतिह्यपुस्तकमेतत् स्पष्टयति यत् कान्यकुब्जनृपतेः **यशोवर्मणः** आक्रमणेनैव खड्गसाम्राज्यं पतितं जातम्, यत् साम्राज्यं बङ्गादारभ्य विन्ध्यपर्यन्तं सुविस्तीर्णमासीत्। किन्तु बङ्गोपरि **यशोवर्मणः** एष विजयः स्वल्पकालिकः [736 ख्रि० यावत्] आसीत्। '**गौडवहो**'नामकस्य प्राकृतकाव्यस्य प्रणेता महाकविर्**वाक्पतिराजः** '**उत्तररामचरित**'स्य प्रणेता महाकवि-र्भवभूतिश्चास्यैव **यशोवर्म्मणः** राज्याश्रितावास्ताम्।

तदनु कर्कोटकनृपतेर्**ललितादित्यमुक्तापीड**स्याक्रमणेन **यशोवर्म्मणः** साम्राज्यं विनष्टं जातिमिति कल्हणस्य राजतरङ्गिणी विवृणुते।[2] कश्मीरस्याधिपतिरसौ ललितादित्यमुक्तापीडः स्वदिग्विजयेन कान्यकुब्जबङ्गसहितं समग्रं जम्बूद्वीपं विजित्य षट्त्रिंशदवर्षं सप्तमासं एकादशदिनं यावत् शासनं न्यभालयत्।[3] तत्काले निर्मिताः देवालयाः वृत्तयः [अग्रहाराः] भुक्तयश्च बिहारप्रान्तेऽथ च बङ्गप्रान्ते इदानीमपि समुपलभ्यन्ते।

तद्यथा—

(क) तीरमुक्तिः, तिरहुत, 'मिथिला' इति (ख) पौण्ड्रभुक्तिः, (ग) वर्द्धमानभुक्तिः, (घ) दण्डभुक्तिप्रभृतयश्चेति।

पशुपतिशिलालेखानुसारं पूर्वप्रदेशेषु कामरूपनृपतेः श्रीहर्षस्याक्रमणं जातम्। एतावता श्रीहर्षस्य साम्राज्यं गौड-ओद्र-कलिङ्ग-कोशलपर्यन्तं प्रसृतमभूत्। कल्हणस्य राजतरङ्गिणी स्पष्टयति यत् ख्रिष्टाब्दस्य 762-763 शताब्द्यां कश्मीरनृपतेर्जयापीडस्यापि पूर्ववर्ति-प्रदेशेष्वाक्रमणं जातम्। जयापीडोऽयमाक्रमणक्रमे पौण्ड्रवर्द्धन-क्षेत्रमप्याजगाम। तदानीं सम्पूर्णबङ्गप्रदेशे पञ्चगौडनृपतीनां शासनमासीत्। **आदिशूरः जयन्तः** तेष्वन्यतमोऽवर्त्तत। कश्मीरनृपः जयापीडः जयन्तपुत्र्या **कल्याणदे**व्या सह पाणिग्रहणं कृत्वा पञ्चगौडनृपान्

---

1. इन्साइक्लोपेडिया इण्डिका, वाल्युम्-20 पृ० 473 एवञ्च वाल्युम् 24 पृ० 363-64.

2. राजतङ्गिणी चतुर्थस्तरङ्गः, पृ० 133-44.

3. इन्साइक्लोपेडिया इण्डिका, वाल्युम-20, पृ० 206.

स्वकीयं श्वशुरं मेने बङ्गराज्यञ्च पुनः जयन्ताय ददौ।[1]

राजतरङ्गिण्याः परिशीलनेनैतदपि सुस्पष्टं भवति यत् ख्रिष्टाब्दस्य [८५५-८८] शताब्द्यां कश्मीरनृपतेः अवन्तिवर्म्मणः अमात्यः अज्ञाताभिधानः कश्चित् **शूरः** आसीत्। तदीया पत्नी **काव्यदेवी**नामा आसीत्। तत्पुत्रस्य चाभिधानं **रत्नवर्द्धन**स्समभवत्।

अमात्यस्य शूरस्य साहाय्येन महाकवेरानन्दवर्द्धनस्याश्रयदातुरवन्तिवर्म्मणः साम्राज्यं समधिकं सुदृढं सञ्जातम्। एतावता तदुपरि प्रीतस्सन्नसाववन्तिवर्म्मा कश्मीरे पीरपंत्सालमार्गे **शूरपुराख्यं** नगरमेकमारचयामास। तत्र स्वकीयं निरीक्षणकेन्द्रं च स्थापितवान्, यद्धि पूर्वं कर्मावर्त्ते स्थापितमासीत्।[2]

ऐतिह्यसाक्ष्यानुसारं समतता-क्षेत्रस्याधिपतिर्देवखड्गः बौद्धधर्मावलम्बी आसीत् किन्तु तत्समकालिकः कर्णसुवर्णक्षेत्रस्याधिपतिः आदिशूरोऽसौ **जयन्तः** सनातनधर्मपक्षधरोऽवर्त्तत। असौ बङ्गप्रान्ते सनातनधर्म्मप्रचार-प्रसाराय कान्यकुब्ज (कन्नौज) तः पञ्चसंख्याकान् विविधगोत्रियान् अग्निहोत्रनिष्णातान् ब्राह्मणान् बङ्गप्रान्ते आनीय पुनस्तत्र सनातनधर्म्मं स्थापितवान्। विषयेऽस्मिन् गौडराजमालायां लिखितं विद्यते यत्—

**''आसीत् पुरा महाराजः आदिशूरः प्रातपवान्।**
**आनीतवान् द्विजान् पञ्च पञ्चगोत्रसमुद्भवान्॥''[3] इति।**

---

1. (A) Jayāpīda reached the city of **paundravardhana,** the subject to the king of **Gauda** at that time protected by a prince called **Jayant.** The Kashmirian monarch married **Kalyanadevi;** the daughter of **Jayant,** and after conquering 'the chiefs of the five Gaudas (pānca Gaudadhipan) made his father-in-law their sovereign.
Dynastic History of Narthern India, Vol. 1, p. 277-78

(B) Rājataranginī, IV 421-68, Kalhana placed the reign of Jayapīda in 751-782 A. D. At the adventures in Gauda-Paundra are placed by Kalhana in the begining of his reign, and as satein has shown that we must correct these dates of the local historian by adding a period of about 12 years. I have placed Jayapīda's possible visit to the lower Ganges velley in C. 762/63 A.D. As to identification of **Jayanta,** I would point-out that it may chronology he is placed sufficently near **Gopal** to rise the suspicion of their indentify.Dynastic History of Narthern India, Vol. 1, p. 277 F. N. 1

2. राजतरिङ्गिणी, चतुर्थस्तरङ्गः, 347-88.

3. डाइनेस्टिक हिस्ट्री आफ इण्डिया, वाल्युम 1, पृ० 320.

इन्साइक्लोपेडिया इण्डिका स्पष्टयति यत् आदिशूरस्य जयन्तस्य जीवितावधि: तत्सत्प्रयासेन पूर्वबङ्गप्रान्तस्योत्तरराढीयक्षेत्रे सनातनधर्म्मः पुनः सुप्रतिष्ठितो जातः किन्तु दिवङ्गते जयन्ते खड्गवंशीयदेवखड्गापत्यस्य राजभट्टस्यासफलशासकत्वात्तत्रत्यैर्बौद्धधर्माव-लम्बिभिर्जैनधर्म्मावलम्बिभिर्नागरिकैर्मत्स्यन्यायेन अर्थात् चयन-प्रक्रियया **दयित-विष्णोः** प्रपौत्रं **वप्पटस्य** च पुत्रं **गोपालं** नृपतिपदेऽधिष्ठितमकारिषुः। असावेव **गोपालः** सुप्रसिद्धस्य पालसाम्राज्यस्याधिष्ठातृत्वेन ख्यातिङ्गतः। विषयेऽस्मिन् **'अष्टसाहस्रिक-प्रज्ञापारमिता'** नाम्नि ग्रन्थे तत्प्रणेता **हरिभद्रो**ऽपि लिखति—

**''राज्ये राजभट्टादिवंशपतितश्रीधर्म्मपालस्य वै।**

**''तत्त्वालोकविधायिनी''** विरचिता षट्पञ्चिकेयं मया[1]॥''

खलीमपुरस्य शिलालेखानुसारं **गोपालस्य** पितामहः **दयितविष्णुर्न** तु ब्राह्मणः न वा क्षत्रियः अपितु बङ्गजकायस्थः आसीदिति। ख्रिष्टीयाष्टमशताब्दयाः पूर्वार्द्धे लेखनीं परित्यज्यासौ खड्गमाधारीकृत्य शत्रुनृपाणां मूलोच्छेदमकार्षीत्। हरिभद्रेणोल्लिखितः **धर्म्मपालः** पालसाम्राज्यस्याधिष्ठातुः **गोपालस्य** पुत्रः आसीत्। एतावता सर्वेषां पालनृपतीनां कायस्थकुलोद्भवत्वं सुसिद्धम्। उभावपि खड्ग-पालशासकौ बौद्धधर्मावलम्बिनावास्ताम्।

बङ्गजनृपतीनां कुलपञ्जिकानुसारमनेकेषां शूरनृपतीनां नामानि प्राप्यन्ते; तद्यथा—

(1) आदिशूरः, (2) भूशूरः, (3) क्षितिशूरः, (4) अवनीशूरः, (5) धरणीशूरः, (6) रणशूरश्चेति[2]।

सनातनधर्मावलम्बिना आदिशूरेण जयन्तेन अग्निहोत्रनिष्णाताः पञ्चगौडाः कन्नौजतः बङ्गप्रान्ते आनीता इति बङ्गीयकुलपञ्जिकाऽभिलपति किन्तु विषयेऽस्मिन् कोषग्रन्थनिर्मातुः सच्चिदानन्दभट्टाचार्यस्याभिसन्धिर्भिन्नैव; तद्यथा—

"If popular tradition as preserved in geneological works is to be trusted then it was about this time that there ruled in Bengal a king named **Ādiśūra,** who is said to have invited to Bengal Five Brahmans with Five non-Brahmans attendants from **Mithila** for the purpose of restoring the purity of Hindu-Cult and rites in Bengal. At anyrate peace and order seem to have been restored to Bengal with the election to the throne of Bengal of one

---

1. तदेव, फुटनोट सं० 1, वाल्युम 1, पृ० 283.

2. तदेव,वाल्युम-1, पृ० 320

स्वकीयं श्वशुरं मेने बङ्गराज्यञ्च पुनः जयन्ताय ददौ।[1]

राजतरङ्गिण्याः परिशीलनेनैतदपि सुस्पष्टं भवति यत् ख्रिष्टाब्दस्य [८५५-८८] शताब्द्यां कश्मीरनृपतेः अवन्तिवर्म्मणः अमात्यः अज्ञाताभिधानः कश्चित् **शूरः** आसीत्। तदीया पत्नी **काव्यदेवी**नामा आसीत्। तत्पुत्रस्य चाभिधानं **रत्नवर्द्धन**स्समभवत्।

अमात्यस्य शूरस्य साहाय्येन महाकवेरानन्दवर्द्धनस्याश्रयदातुरवन्तिवर्म्मणः साम्राज्यं समधिकं सुदृढं सञ्जातम्। एतावता तदुपरि प्रीतस्सन्नसाववन्तिवर्म्मा कश्मीरे पीरपंत्सालमार्गे **शूरपुराख्यं** नगरमेकमारचयामास। तत्र स्वकीयं निरीक्षणकेन्द्रं च स्थापितवान्, यद्धि पूर्वं कर्मावर्त्ते स्थापितमासीत्।[2]

ऐतिह्यसाक्ष्यानुसारं समतता-क्षेत्रस्याधिपतिर्देवखड्गः बौद्धधर्मावलम्बी आसीत् किन्तु तत्समकालिकः कर्णसुवर्णक्षेत्रस्याधिपतिः आदिशूरोऽसौ **जयन्तः** सनातनधर्मपक्षधरोऽवर्त्तत। असौ बङ्गप्रान्ते सनातनधर्म्मप्रचार-प्रसाराय कान्यकुब्ज (कन्नौज) तः पञ्चसंख्याकान् विविधगोत्रियान् अग्निहोत्रनिष्णातान् ब्राह्मणान् बङ्गप्रान्ते आनीय पुनस्तत्र सनातनधर्म्मं स्थापितवान्। विषयेऽस्मिन् गौडराजमालायां लिखितं विद्यते यत्—

**"आसीत् पुरा महाराजः आदिशूरः प्रातपवान्।**
**आनीतवान् द्विजान् पञ्च पञ्चगोत्रसमुद्भवान्॥"[3] इति।**

---

1. (A) Jayāpīda reached the city of **paundravardhana,** the subject to the king of **Gauda** at that time protected by a prince called **Jayant.** The Kashmirian monarch married **Kalyanadevi;** the daughter of **Jayant,** and after conquering 'the chiefs of the five Gaudas (pānca Gaudadhipan) made his father-in-law their sovereign.

Dynastic History of Narthern India, Vol. 1, p. 277-78

(B) Rājataranginī, IV 421-68. Kalhana placed the reign of Jayapīda in 751-782 A. D. At the adventures in Gauda-Paundra are placed by Kalhana in the begining of his reign, and as satein has shown that we must correct these dates of the local historian by adding a period of about 12 years. I have placed Jayapīda's possible visit to the lower Ganges velley in C. 762/63 A.D. As to identification of **Jayanta,** I would point-out that it may chronology he is placed sufficently near **Gopal** to rise the suspicion of their indentify.Dynastic History of Narthern India, Vol. 1, p. 277 F. N. 1.

2. राजतरिङ्गिणी, चतुर्थस्तरङ्गः, 347-88.

3. डाइनेस्टिक हिस्ट्री आफ इण्डिया, वाल्युम 1, पृ० 320.

इन्साइक्लोपेडिया इण्डिका स्पष्टयति यत् आदिशूरस्य जयन्तस्य जीविताबधिः तत्सत्प्रयासेन पूर्वबङ्गप्रान्तस्योत्तरराढीयक्षेत्रे सनातनधर्म्मः पुनः सुप्रतिष्ठितो जातः किन्तु दिवङ्गते जयन्ते खड्गवंशीयदेवखड्गापत्यस्य राजभट्टस्यासफलशासकत्वात्तत्रत्यैर्बौद्धधर्माव-लम्बिभिर्जैनधर्म्मावलम्बिभिर्नागरिकैर्मत्स्यन्यायेन अर्थात् चयन-प्रक्रियया **दयित-विष्णोः प्रपौत्रं वप्पटस्य** च पुत्रं **गोपालं** नृपतिपदेऽधिष्ठितमकारिपुः। असावेव **गोपालः** सुप्रसिद्धस्य पालसाम्राज्यस्याधिष्ठातृत्वेन ख्यातिङ्गतः। विषयेऽस्मिन् **'अष्टसाहस्त्रिक-प्रज्ञापारमिता'** नाम्नि ग्रन्थे तत्प्रणेता **हरिभद्रो**ऽपि लिखति—

**''राज्ये राजभट्टादिवंशपतितश्रीधर्म्मपालस्य वै।**

**''तत्त्वालोकविधायिनी''** विरचिता पट्पञ्चिकेयं मया॥''[1]

खलीमपुरस्य शिलालेखानुसारं **गोपालस्य** पितामहः दयितविष्णुर्न तु ब्राह्मणः न वा क्षत्रियः अपितु बङ्गजकायस्थः आसीदिति। ख्रिष्टीयाष्टमशताब्दयाः पूर्वार्द्धे लेखनीं परित्यज्यासौ खड्गमाधारीकृत्य शत्रुनृपाणां मूलोच्छेदमकार्षीत्। हरिभद्रेणोल्लिखितः **धर्म्मपालः** पालसाम्राज्यस्याधिष्ठातुः **गोपालस्य** पुत्रः आसीत्। एतावता सर्वेषां पालनृपतीनां कायस्थकुलोद्भवत्वं सुसिद्धम्। उभावपि खड्ग-पालशासकौ बौद्धधर्मावलम्बिनावास्ताम्।

बङ्गजनृपतीनां कुलपञ्जिकानुसारमनेकेषां शूरनृपतीनां नामानि प्राप्यन्ते; तद्यथा—

(1) आदिशूरः, (2) भूशूरः, (3) क्षितिशूरः, (4) अवनीशूरः, (5) धरणीशूरः, (6) रणशूरश्चेति[2]।

सनातनधर्मावलम्बिना आदिशूरेण जयन्तेन अग्निहोत्रनिष्णाताः पञ्चगौडाः कन्नौजतः बङ्गप्रान्ते आनीता इति बङ्गीयकुलपञ्जिकाऽभिलपति किन्तु विषयेऽस्मिन् कोषग्रन्थनिर्मातुः सच्चिदानन्दभट्टाचार्यस्याभिसन्धिर्भिन्नैव; तद्यथा—

"If popular tradition as preserved in geneological works is to be trusted then it was about this time that there ruled in Bengal a king named **Ādiśūra,** who is said to have invited to Bengal Five Brahmans with Five non-Brahmans attendants from **Mithila** for the purpose of restoring the purity of Hindu-Cult and rites in Bengal. At anyrate peace and order seem to have been restored to Bengal with the election to the throne of Bengal of one

---

1. तदेव, फुटनोट सं० 1, वाल्युम 1, पृ० 283.
2. तदेव,वाल्युम-1, पृ० 320

**Gopal** by the people of Bengal. Gopal founded the famous pal dynesty."[1]

पूर्वोक्तरीत्या एतत् सुस्पष्टं भवति यद् आदिशूरेण जयन्तेन पञ्चसंख्याकाः गौड़ब्राह्मणाः पञ्चसंख्याकाः सेवकतुल्या अब्राह्मणाः मिथिलातः बङ्गप्रान्ते आनीता इति।

आदिशूरस्य जयन्तस्यातिरिक्तानां शूरनृपतीनामैतिह्यसाक्ष्यं नोपलभ्यते। किन्तु बरखपुरशिलालेखानुसारं ख्रिष्टाब्दस्यैकादशशताब्द्याः अन्तिमे भागे सेनसाम्राज्यस्य संस्थापकेन लक्ष्मणसेनस्य पितामहेन बल्लालसेनस्य पितृचरणेन श्रीमता विजयसेसनेन स्वीकृतं यदसौ शूरनृपतेर्दुहितया '**शूरकुलाम्बोधिकौमुदी**'तिविशेषणविशिष्टया **विलासदेव्या** सह पाणिग्रहणमकार्षीदिति।[2]

सच्चिदानन्दभट्टाचार्यमहाशयोऽपि स्वकीये कोषग्रन्थे न्यूनाधिकपरिवर्त्तनेन सह विषयममुं स्वीकरोति। तद्यथा—

**Śūra dynasty;** The śūra dynasty is traditionally associated with Bengal, more particularly with South-West Bengal. Tradition represents :—

Ādi Śūra (qv) as the founder of the dynasty. He is said to have brought five Brahmans from **Kanauj** and stteled them in **Raḍha** (West Bengal) and **Varendra** (North Bengal) But there is no other independent epigraphic or Numismatic evidence in proof of his existence his date, which varies from the eight to the eleventh centuries, is most uncertain. However, whatever may be the historical fact about Ādi śūa; The Śūra family continued to be powerful in Bengal as last as the eleventh century when king **Vijaya Sena** (q.V.) came to rule [1095 to 1158 C.A.D.]. He had left on record that he married **Vilasha Devi** a princess of the Śūra family to which perhaps had arlier belonged king **Ratna Śūra** who was ruling in Southern Raḍha; when it was invaded by Rajendra Chola. The Śūra dynesty fell after the rise of sendynesty.[3]

---

1. A dictionary of Indian History. by Sachchidanand Bhattacharya. C. 1984, pp 112.
2. (क) डाइजेस्टिक हिस्ट्री आफ इण्डिया, प्रथमः खण्डः पृ० 321, 358, 367.
   (ख) ईपीग्राफिका इण्डिका, पञ्चदशः खण्डः, पृ० 279.
3. A dictionary of Indian History. by Sachchidanand Bhattacharya. pp. 799.

उक्तविवेचनेनैतत्सन्दिह्यते यद् आदिशूरः मिथिलामूलकः **विश्वम्भरः** आसीत् आहोस्वित् पूर्वबङ्गप्रदेशे कर्णसुवर्णक्षेत्रे लब्धजन्मा **जयन्तः**? आदिशूरेण पञ्चगौडाः मिथिलातः बङ्गप्रान्ते आनीता उत वा कान्यकुब्ज (कन्नौज) तः इत्यत्र विदुषां मतैक्यं नावलोकयामः। विषयेऽस्मिन् कश्मीरप्रान्ते विलिखितं 'राजतरङ्गिणी'सदृशं बङ्गप्रान्ते आरचितं 'राजमाला'[1]ख्यमैतिह्यपुस्तकं प्रामाणिकं मत्वा 'भुलुआ'मूलकस्य प्रकृतमहाकवेः वंशवृक्षोऽत्र प्रदर्श्यते—




1. राजमाला, विद्याविनोदप्रकाशनम्, पृ० 123 (त्रिपुरासर्वकारेण प्रकाशिता)

पूर्वोक्तवंशवृक्षे समुल्लिखितेष्वभिधानेषु विश्वम्भररायादारम्य राजवल्लभराय-पर्यन्तानां शूरनृपतीनामाहोस्विद् सेनवंशीयविजयसेनेन परिणीतायाः शूरवंशीय-विलासदेव्याः पितुः रत्नशूरस्य वा किमप्यैतिह्यपरिचयादिकं नोपलभ्यते किन्तु गच्छता कालेन सुप्रसिद्धस्य मुगलशासकस्य अकबरसम्राटस्य [ख्रि० 1556-1605] शासनकाले बङ्गप्रान्ते द्वादशसंख्याकाः भौमिकाः [भूईयाः भूस्वामिनो वा] शासनमकारिषुः। तेषु भौमिकेषु शूरवंशीयः प्रकृतकविः श्रीमल्लक्ष्मणमाणिक्यदेवोऽप्यन्यतमः आसीदिति एफ० आर० विलफोर्ड, डा० जेम्सवाईस, आर० पी० पेट्री जेरिक, एच० ब्लोचमैन, एच० हौस्टेन-प्रभृतिभिः पाश्चात्या-विद्वद्भिरप्यङ्गीकृतम्[1]। नैतावन्त्येवापि तु अकबरनामा, आइन-ए-अकबरीप्रभृतिषु मुगल-ऐतिह्यपुस्तकेष्वापि पूर्वोक्तानां द्वादशसंख्याकानां भौमिकानामभिधानानि समवाप्यन्ते। किम्बहुना विषयममुमधिकृत्य इन्साइक्लोपेडिया इण्डिकाऽपि[2] मुगलशासकस्याकबरस्य साम्राज्ये तदधीनस्थानां द्वादशसंख्याकानां बङ्गीयभौमिकानां वंशपरिचयपुरस्सरमेका तालिका प्रस्तौति, यत्र शूरवंशीयकायस्थस्य 'भुलुआ'नृपतेः श्रीमल्लक्ष्मणमाणिक्यदेवस्याभिधानमपि वरीवर्ति। तद्यथा—

| | अभिधानाम् | यत्रत्यः भौमिकः | जातिः |
|---|---|---|---|
| 1. | कन्दर्पनारायणः | चन्द्रद्वीपस्य भौमिकः | वसुवंशीयः (बङ्गजकायस्थः)। |
| 2. | प्रतापादित्यः, | यशोहरस्य भौमिकः | गुहवंशीयः कायस्थः। |

---

1. (A) The Bārah Bhùyas of Bengal.
   by Dr. James wise.
   See Journal of the Asiactic Society of Bengal.
   c. 1873, Part-1, p. 181-83
   c. 1874, Part-1, p. 197.
   (B) Geography and History of Bengal.
   by Ḥ Blochman.
   —do— c. 1873, Part-1, p. 209.
   (C) The Twelve Bhuiyas or Landlords of Bengal.
   by Ḥ Hosten.
   —do— c. 1904, Part-1, p. 437-49.
2. The Encyclopaedia Indica, Vol-15, p. 318-19

| | | | |
|---|---|---|---|
| 3. | **लक्ष्मणमाणिक्यदेव:** | भुलुआक्षेत्रस्य भौमिक: | शूरवंशीय: कायस्थ:। |
| 4. | मुकुन्दराय: | भूषणाया: भौमिक: | देववंशीय:। |
| 5. | चाँदराय: केदाराराश्च | विक्रमपुरस्य भौमिकौ | धृतकौशिकगोत्रोत्पन्नौ (देववंशीय:)। |
| 6. | चाँदगाजी | चाँदप्रतापक्षेत्रस्य भौमिक: | मुगलवंशीय:। |
| 7. | गणेशरामराय: | दिनाजपुरस्य भौमिक: | उत्तरराढीय: (क्षत्रिय:)। |
| 8. | हम्मीरमल्ल: | विष्णुपुरस्य भौमिक: | मल्लवंशीय:। |
| 9. | कंसनारायण: | ताहिरपुरस्य भौमिक: | वारेन्द्र-ब्राह्मण:। |
| 10. | रामचन्द्रठक्कुर: | पुटिया-भौमिक: | वारेन्द्र-ब्राह्मण:। |
| 11. | फजलगाजी | भौआल-भौमिक: | मुगलवंशीय:। |
| 12. | ईशाखाँ मसनदअली | खिजिरपुर-भौमिक: | मुगलवंशीय:। |

उपर्युक्तेषु द्वादशसंख्याकेषु भौमिकेषु चन्द्रद्वीपस्य कन्दर्पनारायण:, यशोहस्य प्रतापादित्य:, भुलुआ-क्षेत्रस्य लक्ष्मणमाणिक्यदेव:, भूषणा-क्षेत्रस्य मुकुन्दराय:, जाँदगाजी-क्षेत्रस्य चाँदराय:, विक्रमपुरस्य केदाररायश्चैते पञ्चसंख्याका: बङ्गजकायस्था: स्वकीयशासन-नैपुण्येन पञ्चरत्नत्वेन ख्यातिङ्गता:। तेष्वपि पञ्चभौमिकेषु **लक्ष्मणमाणिक्यदेव:** कनिष्ठिकाधिष्ठित: आसीदिति प्रत्नतत्त्वविदां पाश्चात्यविदुषां सी० डब्ल्यू० बी० राऊज् महाशयानामभिसन्धि:[1]। 'सोर्सेज आफ द हिस्ट्री आफ इण्डिया[2] नाम्नि ऐतिह्यपुस्तके 'इन्साइक्लोपेडिया-इण्डिका[3]नाम्नि कोषग्रन्थे चानेकेषां माणिक्योपाधिधारिणां त्रिपुरा-सामन्तानामभिधानानि प्राप्यतन्ते; यानि हि तत्तत्कालीनसमुपलब्धमुद्राभि: ताम्रलिपि-पुराभिलेखादिभिश्च सत्यापितानि सन्ति किन्तु तेषां वंशानुक्रम: नोपलभ्यते। अतस्तन्नेह प्रतन्यते।

बङ्गीयऐतिह्यपुस्तकानामनुशीलेनावसीयते यत् प्रथमन्तावत् त्रिपुरा-सामन्ता: माणि-क्योपाधिधारिण आसन्, यथा हि मुकुटमाणिक्य:, गोविन्दमाणिक्य:, देवमाणिक्य:, कृष्णमाणिक्य: नरेन्द्रमाणिक्यप्रभृतयश्चेति। अत्रास्मद्विचारानुसारं त्रिपुरासामन्ता एव

---

1. Dissertation concerning the landed property of Bengal by C. W. B. Rouse page No. 50.
2. Sources of the History of India Vol. 4, p. 457-71 & p. 474-89.
3. The Encyclopaedia of Indica, Vol.-10, p. 40-57.

आदिशूरस्य जयन्तस्य वंशजास्तदनु तद्बलवीर्यविक्रमानुसरद्भिर्मिथिलामूलकै **'भुंलुआ'**-भौमिकैरप्यनुलोमविवाहपरम्परया स्वकीयं क्षत्रियत्वमपहाय माणिक्योपाधिं धारयित्वा बङ्गीयकायस्थकुलेऽन्तर्निहितैरिवावलोक्यते।

अत्रैतदवधेयम्-**'राजमाला'**प्रदर्शित प्रकृतकवेर्वंशवृक्षावलोकनेन राजवल्लभपर्यन्तं सर्वे भौमिकाः रायोपाधिधारिणः वर्त्तन्ते किन्तु तत्पश्चाद्वर्तिनः भौमिकाः माणिक्योपाधिना विभूषितास्सन्ति। विषयेऽस्मिन् राजमालाऽभिलपति यत् तदानीं पूर्वबङ्गप्रान्ते स्वस्वामित्वहेतवे राज्यविस्ताराय च विरोधिनृपयोर्द्वन्द्वयुद्धं बोभवीतिस्म। तस्मिन्नेव क्रमे त्रिपुरासामन्तेन भुलुआसामन्तः प्रकृतकवेः पितामहः **राजवल्लभरायः** पराजितो जातः। एतावता किञ्चित्कालपर्यन्तं त्रिपुरासाम्राज्यं 'भुलुआ'पर्यन्तं समभिव्याप्तं जातम्। तदनु गच्छता कालेन उदयमाणिक्याग्रजः **दुर्लभनारायणः** माणिक्योपाधिं धारयित्वा त्रिपुरासामन्तोपरि स्वपितृपराजयप्रतीकारस्वरूपमाक्रमणञ्चकार। उभयोर्मध्येऽतिभयावहः द्वन्द्वयुद्धः प्राचलत्। युद्धेऽस्मिन् विजयवैजयन्तीमधिगृह्यासौ दुर्लभमाणिक्यः **आदिशूरसदृशं** स्वस्य बल-वीर्य-विक्रमानुप्राणिताप्रतिहतसामन्तत्वं संसाधतिवान्, अभिनवधृतमाणिक्योपाधिञ्च चरितार्थीकृतवान्। एतस्य विस्तरेण वर्णनं **राजमाला**यामासाद्यते।

**राजमालानुसारं** त्रिपुरासामन्तेन माणिक्योपाधिं त्यक्तुं दुर्लभमाणिक्यः समादिष्टः किन्तु 'भुलुआ'सामन्तः **दुर्लभमाणिक्यः** तदीयमादेशमस्वीचकार। परिणामतः 1578 ख्रिष्टाब्दे त्रिपुराराज्यस्य सर्वविधसैन्यबलानि 'भुलुआ'जनपदे भूयोऽप्याक्रमणञ्चक्रुः। तदाक्रमण-प्रतीकारदुर्बलः **दुर्लभः** 'बकला'-जनपदं प्रपलायितः। तत्रैवासौ स्वकीयपूर्वविद्वेषिणा भूय्यासेन (भौमिकेन, जमिन्दारेण वा) कन्दर्परायेण निहतो जातः।[1] तत्पश्चाद् दुर्लभमाणिक्यानुजेन कवेरस्य पितृचरणेन श्रीमता **गन्धर्वमाणिक्येन** भूयोऽपि त्रिपुरासाम्राज्योपर्य्याक्रमणं कृतम्। आक्रमणेऽस्मिन् त्रिपुरासामन्तः 'यशोमाणिक्यः' पराजितो जातः। एष युद्धः ख्रिष्टाब्दस्य 1605 शताब्द्यामभूत्। युद्धेऽस्मिन् **यशोमाणिक्यः** स्वकीयं

---

1. कत वर्षे अमरमाणिक्य राजा भेल।
माणिक्य ना धर नाम ताहाके लिखिल॥
× × ×
उदयमाणिक्य तवे 'बकला'ते गेल।
कन्दर्पराय, जमिन्दारे ताहारे मारिल॥
राजमाला, पाण्डुलिपि, बङ्गीय-साहित्य-परिषद्, कोलकाता।

पराजयं स्वीकृत्य **गन्धर्वमाणिक्यसविधमात्मसमर्पणञ्चकार।** एतावता 'भुलुआ'नृपतेः राज्यविस्तारः त्रिपुरापर्यन्तं जातः।

बङ्गीयसाहित्यानामनुशीलनेनैतत्परिज्ञायते यद्यथा हि सेनसाम्राज्ये लक्ष्मणसेनस्य शासनकाले 'उमापतिः', 'गोवर्द्धनः', 'श्रुतिधरः', 'धोयी'प्रभृतयः रत्नकल्पाः पञ्चकवयः तद्राज्याश्रिता अवर्तन्त। तत्सदृशमेव **गन्धर्वमाणिक्यपुत्रस्य श्रीमल्लक्ष्मणमाणिक्यदेवस्य** शासनकालेऽपि पञ्चसंख्याकाः रत्नकल्पाः विद्वांसः तद्राज्याश्रिताः आसन्। तेषु रत्नकल्पेषु विद्वत्सु **जामविजयकाव्यप्रणेतुः वाणीनाथस्य** पुत्रः श्रीरामपुरवास्तव्यः **'रघुनाथ-कवितार्किको'**ऽन्यतमः आसीत्। असावेव रघुनाथकवितार्किकः प्रकृतकवेः कुलपुरोहितोऽप्यासीत्। अनेन कवितार्किकेन प्रणीतं **''कौतुकरत्नाकरा''**ख्यं प्रहसनम्, ढाकासंग्रहालये सुरक्षितं विद्यते इति न्यू कैटलागेज कैटलागुरम् स्पष्टयति।[1] कवितार्किकातिरिक्ताः रत्नकल्पाः चत्वारो विद्वांसः निम्नलिखिताः आसन्—

(क) खिलपरा-क्षेत्रस्य रामचन्द्रतर्कपञ्चाननः।

(ख) रामचन्द्रतर्कपञ्चाननस्य पुत्रः रामभद्रसार्वभौमः।

(ग) बैससिन्दूर-क्षेत्रस्य रतिदेवतर्कसिद्धान्तः।

(घ) रघुनाथकवितार्किकस्य पुत्रः रत्नेश्वरविद्यावागीशश्चेति।

रघुनाथकवितार्किके कवित्वशक्तेस्तर्कशक्तेश्च मञ्जुलं सामञ्जस्यमासीत्। एतेन विरचिते **'कौतुकरत्नाकरा'**ख्ये प्रहसने श्रीमल्लक्ष्मणमाणिक्य देवस्य पितुः **श्रीगन्धर्व-माणिक्यस्य** सफलसामन्तत्वानुप्राणित-सैन्यपराक्रमगर्भितः प्रतापातिशयः चतुर्षु पद्येषु प्रशस्तिरूपेण पल्लवितो विद्यते। अनया प्रशस्त्या श्रीगन्धर्वमाणिक्यस्य दया-दाक्षिण्य-शौर्यौदार्यादीनां नृपोचितगुणानां पुष्कलं परिचयोऽपि समासाद्यते। तद्यथा—

**''आसीन्मनोजाधिकरम्यमूर्त्तिः**
**श्वेतातपत्रीकृतचारुकीर्त्तिः।**
**शूरान्वयाम्भोनिधिपूर्णचन्द्रो**
**'गन्धर्वमाणिक्य'-महीमहेन्द्रः'' ॥ 7 ॥**

---

1. न्यू कैटलागेज कैटलागुरम् वाल्युम-5, पृ० 308

अपि च—

आभूमण्डलमासुरेन्द्रसदनादासप्तपातालका-

दासप्तार्णवमाधराधरकुलादापद्मसद्मालयात्।

आवैकुण्ठमजृम्भि यस्य समर-प्रस्थानलीलाविधौ

भेरीभाङ्कृति-कुम्भिचीत्कृति-धनुष्टङ्कारवाजिस्वनैः ॥ 8 ॥

तथा च—

गजेन्द्रजीमूतमदाम्बुवृष्टिभि-

र्महीपतेर्यस्य पुरस्य सन्निधौ।

नितान्तदूरेऽपि विपक्षभूभुजां

प्रतापवह्निः प्रशमं समागतः ॥ 9 ॥

अन्यच्च—

भ्रमति युधि करीन्द्रे यस्य संरूढपक्षः

क्षितिधर इति मोहादग्रहीद् वज्रमाशु।

तदनु दशनवीक्षापास्ततादृग् भ्रमोऽयं

सुरसदसि सलज्जो वज्रपाणिर्बभूव[1] ॥

त्रिपुरायां 1793 ख्रिष्टाब्दस्य 19 तमस्याधिनियमस्यानुसारं 25 तमे अनुच्छेदे तत्कालीन-भूस्वामिभिः राजस्वरहितभूभागस्य मूलमभिलेखजातं प्रस्तोतव्यमासीत्। परिणामतः तदानीं राजाज्ञया भूनिबन्धनं जातम्। तस्मादधुनापि त्रिपुरा-समाहर्त्ता-कार्यालये तत्सम्बन्धीनि-शताधिकान्यभिलेखजातानि सुरक्षितानि सन्ति। उपेक्षितेष्वसुरक्षितेषु चैतेस्वभिलेखेषु 'नोआखाली' मण्डलादेका प्रति समधिगतेव प्रतीयते। अभिलेखेनानेन **गन्धर्वमाणिक्यस्य** साम्राज्यः संसूचितो भवति। अयमभिलेखः 1776 ख्रिष्टाब्दीये वर्षे प्रस्तुतो जातः। यद्यप्यस्याभिलेखस्य मूलप्रति इदानीं यावन्नासादिता तथापि ताम्रपत्रोपर्य्युट्टङ्कितास्तद-भिलेखविषयाः [अभिलेख सं० 1912] अत्र प्रस्तूयन्ते:—

1. The Indian Historical quarterly. Vol-14, p. 739.

श्रीकृष्णचरणस्मरणम्।

''स्वस्तिश्रीकृष्णचरणाम्भोजचञ्चरीकेन धीमता।
लीलाप्रतिहतकोदण्डकाण्डैः खण्डितवैरिणा॥
गोविन्दचरणद्वन्द्वपरायणपरात्मना।
कलाभिरवतीर्णेन महापारिषदस्य च॥
'श्रीश्रीगन्धर्वमाणिक्य'-महीपतिमहात्मना।
दत्ता वित्तिर्द्विजातिभ्यः पितुः स्वर्गाभिवृद्धये॥
श्रीरामचन्द्रधीराय श्रीरामानन्दशर्म्मणे।
हृदयानन्दविप्राय विदुषे ब्रह्मचारिणे॥
काचीहाटानजिरपुरयोर्मिश्रनीलाम्बरस्य
यावद्भूमिर्भवति रघुयाकीयवाटीसमेता।
तस्थिल ( ? ) वाटीलवणमहले विप्रदुर्गावरस्य
मिश्रायोपञ्चतु परिगतै ( ? ) पञ्चरेखार्द्दयेसां॥ ( ?? )
अत्र गृहपूर्णग्रामपञ्चकात् आयपोषाः समुपेक्षिता इति।
यथेष्टं पुत्र-पौत्रादिक्रमेणोपभुज्यताम्।
यदा यदा यस्य भवेद्धरित्री तदा तदा तत्फलमेव तस्य।
अतः द्विजानां ( हि ) मया प्रदत्ता वित्तिर्नरेन्द्रैः परिपालनीया॥
स्वदत्तां परदत्तां वा ब्रह्मवित्तिं हरेत्तु यः
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः'' ॥इति 1407 तारिख॥

यद्यपि ताम्रपत्रमिदं मुद्रापितं नैव विद्यते। तस्मादेतेन ताम्रपत्रेण कश्चिन्नृपः परिचायितो न भवति। किन्त्वत्र भूदानकर्त्तुरभिधानम्—''श्रीश्रीयुत्-गन्धर्वमाणिक्यदेव''स्येति वामभागे समुट्टङ्कितं वर्त्तते। अथ च तस्य दक्षिणे भागे ''श्रीलश्रीमदन्तरायस्य'' इत्यपि समुत्कीर्णं विद्यते। तस्मादेतदनुमीयते यदसावनन्तरायः श्रीगन्धर्वमाणिक्यस्य मुख्यमन्त्री स्यादिति। अस्याभिलेखस्य तुरुष्कभाषायामनुदितो भागः 1796 खिष्टीये वर्षे कतिपयैर्भौमिकैः [ भूय्यासैः

1. The Indian Historical quarterly. Vol-14, p. 740.

भूस्वामिभिर्वा] त्रिपुरासमाहर्त्तालये समर्पितः सुरक्षितश्च विद्यते। अस्मिन् दानपत्रे दत्तायाः भूमेः मानम् 3 द्रोण, 24 कनिस इत्युल्लिखितोऽस्ति। या खलु भूमिः 'भुलुआ'परगानायां षट्सु ग्रामेष्वभिव्याप्तेति प्रतिभाति। तद्यथा—

''काजीहाथः, जयनारायणपुरम्, कृष्णरामपुरम्,

रामचन्द्रपुरम्, रघुदेवपुरम्, राघोपुरञ्चेति।''

एतस्मिन्नभिलेखे समुत्कीर्णेषु दिनाङ्केषु पौर्वापर्यसम्बन्धस्थापनार्थमेका स्वतन्त्रगवेषणा अपेक्षितेति डा० दिनेशचन्द्रभट्टाचार्योऽभिप्रैति। एष कालः तदानीन्तनस्य त्र्यधिकचतुःशततमं [403] वर्षं संसूचितो विद्यते। यः खलु कालः आंग्लभाषायाः 't' इति व्यञ्जनवर्णेन प्रदर्शितोऽस्ति। अभिलेखेऽस्मिन् समयसूचकः सङ्केतः तुरुष्कभाषायां समुत्कीर्णोऽस्ति। तद्यथा-सन् 403 **परगनातिः** इति। अयं हि **परगनाति**कालः 'भुलुआ'परगनायामेवञ्च तन्निकटस्थपरगनासु अष्टादशशताब्दीं यावत् प्रयुज्यतेस्म। एतद्धि बङ्गीयप्राचीनैरभिलेखैरपि प्रमाणितं भवति। समुपलब्धविविधैरैतिह्यसाक्ष्यैरेतदपि सत्यापितं भवति यदेतन्मूलतः बङ्गदेशीयं ''कार्तिकादिवर्षं'' विद्यते। एषोऽभिनवः कालः 1201-1202 ख्रिष्टाब्दे बङ्गप्रान्ते प्राचलत्। त्रिपुराराज्ये तु 'सारिल'-परगनान्तर्गतमेतत्कालसंसूचकं वर्षं 1199 ख्रिष्टाब्दे प्रारब्धमिति प्रतिभाति। कालान्तरे केवलं 'भुलुआ'परगनायां तत्रत्यैर्भौमिकैः शासनस्वीकृतिवशादयं हि कालः प्रयोगयोज्यः समजनि। एकस्यां बङ्गीयमातृकायां ''परगने-भुलुआ' 487'' इत्युल्लिखितं विद्यते।

उक्तविवेचनेनैतत्सुस्पष्टं भवति यत् पूर्वोल्लिखितस्य ताम्रपत्रस्य परगनातिकालिकत्वात्तदभिलेखस्य प्राचीनत्वमैतिह्यमहत्त्वाधायकत्वञ्च सुसिद्धमेव। श्रीमतः दुर्गासिंहस्य **'कातन्त्रवृत्तिटीका'** नामधेया एका पाण्डुलिपिः डा० दिनेशचन्द्रभट्टाचार्यमहाशयेन संपादिता; या खलु मातृका एतस्मात् ताम्रपत्रात् प्राचीनतरा। तत्र ग्रन्थान्ते विलिखितं विद्यते—''शुभमस्तु। शकाब्दः 1451, 't' सम्बत् 327 इति। अस्याः मातृकायाः बङ्गदेशीयत्वात् 't' सम्बत्संसूचकत्वाच्च एकविज्ञातेन सर्वं विज्ञातं भवतीतिन्यायेन पूर्वोक्तताम्रपत्रे समुट्टङ्कितस्य 't' संवत्सरस्य साहाय्येन ख्रिष्टाब्दनिर्धारणं सुकरमेव। तदनुसारं **श्रीमता गन्धर्वमाणिक्येन** निर्मापितं भूदानताम्रपत्रं 1605 ख्रिष्टाब्दे समुत्कीर्णं जातिमित्यवधेयम्।

मुगलशासकस्य अकबरस्य शासनकालपर्यन्तमयं 't' संवतत्सरः बङ्गप्रान्ते प्रयुक्तो जातः। कालान्तरे पूर्वपल्लवितः परगनाति-संवत्सरः बङ्गसंवत्सरेऽन्तर्भूतः।

बङ्गप्रान्ते तत्कालवर्तिन अतिन्यूनास्सार्वभौमराजानस्ताम्रपत्रनिर्मापनादिकार्यं कारयन्तिस्म।

तस्मात् कारणात्तत्र ताम्रपत्राणां संख्या अल्पीयसी विद्यते। पूर्वोल्लिखितं ताम्रपत्रं प्रकृतकवेः श्रीमल्लक्ष्मणमाणिक्यदेवस्य पितुः 'भुलुआ'भौमिकस्य श्रीमतः गन्धर्वमाणिक्यस्य शासनकाले निर्मापितं विद्यते। असौ हि गन्धर्वमाणिक्यः[1] तदानीन्तनेषु द्वादशसंख्याकेषु भौमिकेष्वन्यतमः आसीत्।

''कौतुकरत्नाकर''स्याधस्तनं पद्यं कवितार्किकेन स्वाश्रयदातुर्नृपकवेः श्रीमल्लक्ष्मण-माणिक्यदेवस्य प्रशंसायामारचितं वरीवर्त्ति, तथा हि—

**''सस्नेहं जनिता सुकोमलपदाद्वाल्मीकिना तत्परं**
**वात्सल्याद्विविधैः रसैर्भगवता व्यासेन सम्वर्द्धिता।**
**माधुर्यं गमिता सुवर्णसदलङ्कारैर्मयूरादिभि-**
**स्सम्प्राप्ता दयितं चिरेण कविता श्रीमल्लक्ष्मणक्ष्मापतिम्''॥ 15॥**

कवितार्किकस्य पूर्वोक्तं प्रशंसात्मकं पद्यं ''**विख्यातविजय**''स्य प्रस्तावनायां सूत्रधारगिरा त्रिकालाबाधितसत्येन सत्यापितं भवति। यथा—

**''यद्यपि महामनीयमहिम्ना तेनोपनिबद्धानि दृश्यकाव्यानि बहून्यनुवर्त्तन्ते तथापि विशिष्टविशेषणै''विख्यातविजयं'' नाम नाटकं कण्ठोत्थमिव सम्भावितं भावेन॥''**[2] इति।

श्रीमल्लक्ष्मणमाणिक्यदेवस्य काव्यप्रवृत्तौ कलिकल्मपरहितानां दानवीराणां तदीय-पूर्वजानामविस्मरणीयं योगदानमासीदिति ''**विख्यातविजय**''नाटकस्यामुना पद्येन स्फुटी भवति।

तद्यथा—

**''यत्पूर्वाभिजनीयकाव्यमुदधिं संश्राव्य दिक्सुभ्रुव-**
**स्तस्मान्मौक्तिकमालिका प्रतिदिनं गृह्णन्ति तेनापि तत्।**
**प्रागल्भ्यादुपहृत्य वृत्रवनितावैधव्यदीक्षागुरो-**
**रेकैकेन परार्द्धमौक्तिकलिपेरासादिताः प्रीतयः॥''** इति।

---

1. गन्धर्वमाणिक्यः:-A śūra chief of Bhulua, who ruled over a major part of Noākhālī in Bengal. Younger brother and successor of दुर्लभ or उदयमाणिक्य died in 1578 A. D. New Catalogus catalogurum. Vol-5, p. 308.
2. विख्यातविजयस्य प्रस्तावना, 1/16

आमन्दानन्दसन्दोहस्य विषयोऽयं यन्न केवलं श्रीमल्लक्ष्मणमाणिक्यदेवः कवित्व-शक्तिसम्पन्नः आसीत्; अपितु एतदीयौ द्वौ पुत्रावपि काव्यप्रणयनेन साहित्याकाशे ख्यातिङ्गतौ। तत्र प्रथमस्तावत् श्रीधन्यमाणिक्यानुजः श्रीचन्द्रमाणिक्यः आसीत्। एतेन आरचितं "**अपदेशशतका**[1]भिधं काव्यरत्नं डा० दिनेशचन्द्रभट्टाचार्यमहाशयस्य व्यक्तिगतसंग्रहे संरक्षितं विद्यत इति "द भुलुआ चीफ्स एण्ड देयर लिटरेरी वर्क्स" नामधेये स्वकीये गवेषणात्मके निबन्धे तेनैव स्वीकृतम्[2]। अत्र श्रीमता भट्टाचार्यमहोदयनोद्धृतं अपदेशशतकस्य पद्यद्वयं तदीयकाव्य-प्रतिभासमाकलनार्थमुपन्यस्यते। तद्यथा—

**"धैर्योद्रेकाद्गहनजलधिर्भीमकल्पो बलीयान्**
**विद्योद्रेकात् सुरगणगुरुः पार्थतुल्यो धनुष्मान्।**
**दानोद्रेकात् त्रिदशविटपी धर्म्मतो धर्म्मभूभृज्-**
**ज्ञानोद्रेकाज्जनकनृपतिर्धन्यमाणिक्यभूपः॥ 9॥**

**सहजस्तस्य कनीयान्निदेशकारी प्रियान्वेषी।**
**तनुतेऽपदेशशतकं श्रीचन्द्रमाणिक्यभूपः॥ 2॥**

असौ चन्द्रमाणिक्यः स्वपितृसदृशं लोकोंत्तरकाव्यप्रतिभासम्पंन्नः आसीत्। तल्लोकोत्तर-त्वनिकषभूतं "अपदेशशतकस्या"धस्तनं पद्यं ओजोगुणसम्पन्नत्वान्नितरां स्फूर्त्तिदायकं वरीवर्त्ति। तद्यथा—

**"अन्तर्बहिः सुमलिने बत नीरसेऽस्मिन्**
**स्नेहं प्रयोजयसि शुद्धमते! वृथैव।**
**कस्मै फलाय तु भवेद् वद भस्मराशौ**
**भागीरथीविमलवारिवराभिषेकः"॥ 36॥**

अस्यामेव काव्यप्रणयनपरम्परायां श्रीमल्लक्ष्मणमाणिक्यदेवस्यान्तिमेन पुत्ररत्नेन श्रीमता

---

1. अपदेशशतकम् or अन्यापदेशशतकम्, Written by Chandra Manikay Dev, Brother of Dhanya Manikya Dev of Bhulua Tippera, Bangal, Dhacca MSS 2598 Another MSS in Dinesh Chandra Bhattacāryya's Family Collection. See N.C.C. Vol.-1, p. 239, 2598.
2. The Indian Historical Quarterly, Vol.-14, p. 745.

अमरमाणिक्येन "**वैकुण्ठविजया**"[1]ख्यं काव्यं प्रणीतम्। एतद्धि काव्यरत्नं ऊषा-प्रद्युम्नयोः प्रणयकथामाधारीकृत्य विरचितं विद्यते। अमरमाणिक्यस्यैतत्काव्यं तदीयज्येष्ठभ्रातुः स्वनामधन्यस्य श्रीमतः धन्यमाणिक्यस्य शासनकाले आरचितं विद्यते इति डा० दिनेशचन्द्र-भट्टाचार्यस्याभिसन्धिः। कविवरोऽमरमाणिक्यः वैकुण्ठविजयस्य प्रस्तावनायां स्वीकरोति यदसौ श्रीमल्लक्ष्मणमाणिक्यस्य कनीयः पुत्रस्तदुत्तराधिकारिश्च वर्त्तत इति। असावपि स्वपितृसमतुल्यं कवित्वप्रतिभासम्पन्नः आसीत्। पितृवच्च ब्राह्मणेभ्यो भूदानेनातुलं यशश्चयमविन्दत। त्रिपुरासमाहर्त्तालये तदीयभूदानस्याभिलेखः (सनद) सुरक्षितोऽस्ति, यस्य संख्या 1070 विद्यते। एतदभिलेखानुसारं श्रीमता अमरमाणिक्यनृपेण चैत्रमासस्य तृतीयतारिकायां 494 परगनातिवर्षे (1696-97 ख्रिष्टाब्दे) मनोहरशर्म्मणे भूदानं कृतम्। एतस्य मनोहरमिश्रस्याभिधानोल्लेखः प्रकृतनाटकस्य विख्यातविजयस्य प्रस्तावनायामपि नृपतिकविना लक्ष्मणमाणिक्यदेवेनात्यन्तसमादरभावेन कृतो विद्यते।

नाटकप्रणयनप्रवृत्तौ श्रीमल्लक्ष्मणमाणिक्यदेवस्य पौत्रेण श्रीमतः अमरमाणिक्यस्य च पुत्रेण 'राजधर' इत्यपराभिधानेन कविराजेन राममाणिक्येन माधव-सुलोचनायाः पौराणिकमितिवृत्तमधिगृह्य अङ्कत्रयात्मकं "**कृतार्थमाधवं**" नाम नाटकं प्रणीतमिति डा० हरप्रसादशास्त्रि[2], के० कृष्णमाचारि[3]महाशयादिभिरनुमतं मतम्। इत्थं वयं विलोकयामः यदस्मिन् शूरान्वये कवि-नृपतिषु श्रियाः सरस्वत्याश्च मणिकाञ्चनसंयोगः आसीदित्यत्र न सन्देहलेशावसरः। अस्तु।

श्रीमल्लक्ष्मणमाणिक्यदेव-प्रणीतं "**विख्यातविजयाख्यं**" नाटकमिदं ख्रिष्टाब्दस्य सप्तदशशताब्द्यामारचितं विद्यते। रामायणं महाभारतञ्चेति ग्रन्थद्वयं प्रायशस्समेषां काव्यनाटकादीनामुपजीव्यभूतमिति विदितचरम्। प्रसङ्गेऽस्मिन् प्रकृतकविना श्रीमता लक्ष्मणमाणिक्यदेवेनापि नाटकस्यास्य प्रस्तावनायां व्यलेखि—

**"चतुर्वेदोक्तनिर्यासैर्व्यासेन ब्रह्मरूपिणा।**
**भारतामृतपाथोधिः परिमुक्तावधिः कृतः॥**

---

1. नोटिसेज् आफ संस्कृत मैन्युस्क्रिप्टस, वाल्युम-04, रिपोर्ट सं० 283.
by हरप्रसादशास्त्री.
2. नोटिसेज आफ संस्कृत मैन्युस्क्रिप्टस, by हरप्रसादशास्त्रिः, वाल्युम-II, पृ० सं० 38.
3. क्लासिकल संस्कृत लिटरेचर by के० आचार्य। रिपोर्ट सं० 778, पृ० स० 694.

तस्य शीककल्पेन वाग्वैदग्ध्येन साङ्कुरम्।
कवयोऽन्ये यशोबीजं जनयन्तः प्रतिष्ठिताः॥
पुत्रद्वयमवाप्यैव विश्वरूपा सरस्वती।
आद्यं वल्मीकजन्मानं पाराशर्यमपूर्वजम्॥[1]

यद्यपि वाल्मीकि-व्यासादयोऽस्माकं ऋषि-महर्षयः स्वकीयया दिव्यदृष्ट्या कलिप्रभावादग्रिमायां पंक्तौ समागम्यमानानां माया-मलमहिम्ना लोभ-मोह-मद-मात्सर्यादिभिर्बन्धकारणैः परिप्लुतान्तःकरणानां क्षितितले आगमनं विलोक्य तन्नियन्त्रणाय अधर्म्मस्योपरि धर्म्मस्य विजयाशंसायां परस्परं स्पर्द्धमानान् ग्रन्थरत्नान् प्रणीय पापभारैरवनितलं संरक्षितुं समधिकं यत्नमकारिपुस्तथापि पापापरोधाय तैस्तथाविधकृतेऽपि प्रयासबाहुल्येऽथ च तत्तदुपदेशप्रधानग्रन्थरत्नानां क्षितितलेऽस्मिन् विद्यमानत्वेऽपि न कश्चिदत्र रामायते, कृष्णायते, युधिष्ठिरायतेऽपितु असत्पक्षपातं कृत्वा कर्णायते, दुःशासनायते, शकुनीयते चापीति। अस्माकं विचारानुसारं तु कलिप्रभावादवनितलेऽस्मिन्ननुदिनं महाभारतं बोभवीति। तन्निरोधाय अस्माभिस्सर्वैः संस्कृतज्ञैर्बद्धपरिकरैर्यत्नशीलैर्भाव्यम्।

दृश्य-श्रव्यात्मकानां निखिलकाव्यानामुपजीव्यभूतयोः पूर्वोक्तयोः रामायण-महाभारताख्यग्रन्थरत्नयोः महाभारतस्य कर्णपर्वणि कर्णनिधनस्यातिलघुरूपं कथानकमितिवृत्तत्वेनाधिगृह्य प्रकृतकविना श्रीमता लक्ष्मणमाणिक्यदेवेन भट्टनारायणस्य "**वेणीसंहार**"सदृशं "**विख्यातविजयम्**" नाम नाटकं प्रणीतम्। अत एव वस्तु-नेतृ-रसेषु नाट्यप्रमुखाङ्गेषु अत्र मिश्रं कथावस्तु नाटककृता प्रस्तुतमिति वयमवधारयामः। एतन्नाट्यप्रणयनस्य प्रमुखं कारणमिदं यत्कवेरस्य समकालवर्त्तिनो राजानः सामान्यजनाश्च मुगलशासकानामाक्रमणजन्यैर्जन्यैस्समधिकं खिन्नास्समवर्त्तन्त। फलत एतद्देशोद्भवानामप्रतिमशौर्यसम्पन्नानामैतिह्यवीरपुरुषाणां प्रबलपराक्रमगर्भितैः वीररसप्रधानैः कथानकैर्भारतीयानुद्बोधनपुरस्सरं वैदेशिकशासनेभ्यः भारतं स्वतन्त्रं कारयितुं नाटकमिदं कविनानेन प्रणीतमिति ऐतिह्यविदामभिसन्धिः। नाटकस्यास्य पात्राणां व्यङ्ग्यमुखेन विम्बविधानं प्रकृतकवेरभीष्टम्।

अत्र मुगलशासकाः कौरवस्थानीयाः, भारतीया पाण्डवस्थानीयाः, कर्णश्चासत्पक्षधरः कौरवसहाय्यकृदिति। एवम्प्रकारेण कर्णसम्मिश्रेषु कौरवकल्पेषु मुगलशासकेषु पाण्डव-

---

1. विख्यात विजयम् नाटकम्, प्रथमाङ्कः, पद्य सं० 8-10.

स्थानीयानां भारतीयानां विजय एव कवेरस्यात्यन्तिकं लक्ष्यमित्यवधेयम्।

''**एक एव भवेदङ्गी शृङ्गारो वीर एव वे**''ति भरतानुशासनादत्र वीररसस्यैव प्राधान्यम्। अन्ये रसाश्चात्रोपष्कारकाः अतएवाङ्गभूताः। तदनुकूलोऽर्जुनोऽत्र धीरोदात्तनायकः प्रतिनायकश्च कर्ण इति नेतृ-रसयोः स्फुटं परिचयः समुपलभ्यतेऽत्र प्रयोजनन्तु अभिहितपूर्वम्। नाटकमिदमन्वर्थाभिधानम्। तद् व्युत्पत्तिर्यथा—

विख्यातश्चासौ विजयश्चेति विख्यातविजयस्तत्कथानकमधिगृह्य कृतं नाटकं ''विख्यातविजयमिति''। आहोस्विद् विख्यातो विजयो यत्रेति विख्यातविजयस्तदधिकृत्य कृतं नाटकं ''विख्यातविजयमि''ति। अर्थाद् विख्यातवीरस्य कर्णस्योपरि विख्यातवीरस्यार्जुनस्य विजयः महाभारतयुद्धे ख्यातिं भजते। तस्मादुभयथापि नाटकस्यास्याभिधानसार्थकत्वं सुसिद्धम्।

नाटकमिदं षट्सु अङ्केषु विभक्तं विद्यते। अत्रत्यमितिवृत्तं प्रसिद्धमैतिहासिकञ्चे-त्युदीरितपूर्वम्। वीररसप्रधानेऽस्मिन् नाटके आलङ्कारिकाचार्यैर्निर्धारितानां बीज-बिन्दु-पताका-प्रकरीप्रभृतीनां प्रायशस्समेषां नाट्याङ्गानां सफलप्रयोगोऽवाप्यते। कवेरस्य रचनेयं सहृदय-चित्तानुरञ्जनक्षमा, तस्मात् कारणात् पूर्वबङ्गप्रान्ते विविधजनपदेषु विदग्धधुरीणै-स्सहृदयसामाजिकैर्नितरां समादृता सती सर्वतोभावेन तदानीं ख्यातिङ्गतेति विदुषामभिसन्धिः। यद्यपि मुगलशासनकाले संस्कृतभाषायाः समधिकं ह्रासस्समजनि तथापि तस्मिन् ह्रासयुगेऽपि ऐतिहासिकं नाटकमिदं कवेस्य नवनवोन्मेषगर्भितं प्रतिभा-प्रकर्षं द्योतयति।

नाटकस्यास्य प्रथमाङ्के सहदेवस्य श्रीकृष्णानयनाय द्वारिकागमनं श्रीकृष्णानयनञ्च कविनाऽनेन सुनिपुणं वरीवर्णि। द्वितीयाङ्के एकतः कर्णशल्ययोर्वाग्विरोधोऽपरतश्च कर्णेन सह नकुलस्य वीरौपयिकं युद्धं नकुलनिग्रहश्च वर्णितो विद्यते। तृतीयाङ्के गाण्डीवनिन्दया युधिष्ठिरं प्रति धनञ्जयस्य क्रोधावेशः 'श्रीकृष्णेन धनञ्जयकोपोपशमनम्' कर्णवधाय धनञ्जयेन विहितः प्रबलस्संकल्पः, विजयावाप्तये धनञ्जयस्य समराङ्गणे प्रस्थानञ्च वर्णितं विद्यते। चतुर्थाङ्के द्वयोरपि रथारूढयोः कर्णार्जुनयोः द्वैरथयुद्धारम्भः वर्णितोऽस्ति। पञ्चमाङ्के केवलं कर्णनिधनमेव कविनानेन वर्णितम्। षष्ठाङ्के कर्णनिधनादानन्दितानां पाण्डवा-नामानन्दोत्सवः समुपवर्णितो विद्यते। अन्ते च कतिपयैराशीर्वादात्मकै-र्भरतवाक्यैर्नाटकमिदं परिपूर्णं भवतीति।

नाटकेऽस्मिन् संवादसम्प्रेषणीयता तु अभूतपूर्वा। तद्यथा द्वितीयाङ्के ''**किमनेन क्षत्रियत्रसरेणुतिरस्कारेण?**

''**अरे! पाण्डवद्व्यणुक**'' इत्यादिभिः कर्णमुखान्निसृतैर्नव्यन्यायशास्त्रीयैर्वाक्यविशिखैः

बङ्गालप्रान्ते तदानीन्तनस्य नव्यन्यायशास्त्राध्यनाध्यापनस्य परिज्ञानं सहजतया सञ्जायते।

श्रीमल्लक्ष्मणमाणिक्यदेवस्य द्वितीयं नाटकं कुवलयाश्वचरितं विद्यते। कुवलयाश्व-मदालसायाः प्रणयकथामाधारीकृत्य नवसर्गात्मकं नाटकं कविनानेन प्रणीतमिति डा० हरप्रसादशास्त्रिमहोदयेन स्वकीये ''नोटिसेज आफ संस्कृत मैन्युस्क्रिप्ट्स'' नामधेये कोषग्रन्थे निर्दिष्टम्[1]। तत्र तेनैवोल्लिखितं यल्लक्ष्मणमाणिक्यदेवेन प्रणीतस्य कुवलयाश्वचरितं नाम नाटकस्य आदर्शमातृका नोआखालीमण्डलान्तर्गतं 'खिलपरावीआ'वास्तव्यस्य पं० रामगोविन्दमहाशयस्य व्यक्तिगतसंग्रहे सङ्कलिता विद्यते। कवेरस्यैतन्नाटकमप्यद्य-पर्यन्तमप्रकाशितमेव।

श्रीमल्लक्ष्मणमाणिक्यदेवस्य कुलगुरुणा श्रीरघुनाथकवितार्किकेन प्रणीतस्य ''**कौतुकरत्नाकराख्य**''प्रहसनस्य प्रस्तावनायां समुल्लिखितैः पद्यजातैः सुस्पष्टं भवति यत् श्रीमता लक्ष्मणमाणिक्यदेवेन चमत्कृतपद्यानां सागरोपमं ''**सत्काव्यरत्नाकरा**''ख्यं सूक्ति-संवलितं काव्यमेकं प्रणीतम्। एतद्धि काव्यरत्नं तदानीं न्यायव्याकरणादि-श्रमसाध्यशास्त्राणां पठन-पाठनेन श्रान्त-क्लान्तमतीनां विश्रान्तिहेतवे तन्मनोविनोदाय च प्रकृतकविना लक्ष्मण-माणिक्यदेवेन विरचितमिति कौतुकरत्नाकरस्य निम्नपद्यं प्रमाणयति—

**''न्याय-व्याकरणादिशास्त्रनिवहस्वाध्यायमध्यन्दिन-**
**प्रोद्याम-द्युमणिप्रभाभिरभितस्सन्तापितानां सताम्।**
**धीराणामवगाहनाय गहनस्वच्छैः रसैः पूरितः**
**श्रीमल्लक्ष्मणभूभुजा विरचितः सत्काव्यरत्नाकरः[2]॥ 17॥**

सौभाग्यवशात् श्रीमल्लक्ष्मणमाणिक्यदेवेन प्रणीतं ''सत्काव्यरत्नाकराख्यं सूक्तिसंवलितं काव्यरत्नमिदं मातृकारूपेण डा० दिनेशचन्द्रभट्टाचार्यस्य व्यक्तिगतसंग्रहे सङ्कलितमस्तीति स्वयं श्रीमता भट्टाचार्यमहाशयेनाङ्गीकृतम्। तत्रत्यं पद्यमेकं रघुनाथकवितार्किकेन स्वकीये ''कौतुकरत्नाकरा''ख्ये प्रहसने श्रीमल्लक्ष्मणमाणिक्यदेवस्याभिधाननिर्देशपुरस्सरं याथातथ्येन व्यलेखि। तद्यथा—

---

1. नोटिसेज आफ संस्कृत मैन्युस्क्रिप्टस by डा० हरप्रसादशास्त्री, वाल्युम-4 रिपोर्ट सं० 60, पृ० 47.
2. कौतुकरत्नाकरम् प्रहसनम्, पद्य सं० 17.
अगरतला पैलेस लाइब्रेरी, MSS No. 41, ढाका.

''सभ्याः सदर्थं कलयन्ति काव्ये
दिशन्ति दोषान् पिशुना प्रयत्नैः ।
मधूनि पुष्पे मधुपाः पिबन्ति
कुर्वन्ति कीटाः किल वृन्तभेदम् ।। 23 ।।[1]

पूर्वोक्तपर्यालोचनेनैतत्सुस्पष्टं भवति यत् श्रीमल्लक्ष्मणमाणिक्यदेवस्य कृतित्वेन त्रयो ग्रन्थाः ख्यातिं भजन्ते। तद्यथा—

1. विख्यातविजयम् नाटकम्।
2. कुवलयाश्वचरितम् नाटकम्।
3. सत्काव्यरत्नाकरश्चेति। अस्तु।

नाटकस्यास्य सम्पादनकर्मणि व्यापृतेन मया प्रकृतनाटकस्य मातृकाऽन्वेषणधिया विविधमातृकागारेषु समुपलब्धाः कोष-ग्रन्थाः समवलोकिताः। तस्मिन्नेव क्रमे डा० हरप्रसादशास्त्रिमहोदयेन निर्मितः ''नोटिसेज् आफ संस्कृत मैन्युस्क्रिप्ट्स'' नामकः कोषग्रन्थोऽपि मया समवलोकितः। तत्र द्वितीये खण्डे 160 पृष्ठे सन्दर्भसं-136 स्थले शास्त्रिमहोदयेन 'विख्यातविजयस्य विवरणं दत्तम्। तद्यथा—

विख्यातविजयम् by लक्ष्मणमाणिक्यदेवः,

Substance–palm-leaf, 14X1$^1/_2$ inches.

Folia-108, Lines-3 on a page.

Extent-1,300 Clokas. charactar-Bengali.

Date Sk 1677. place of deposit comilla.

pandit Anandachandra Tarkavāgīca.

Appearance-Tolereble. prose and verse.

Generally correct.

अस्मद्विचारानुसारं शास्त्रिमहाशयेनोल्लिखिता ताडपत्रेषु विलिखिता विख्यातविजयस्य पूर्वोक्ता मातृका प्राचीनतमा आदर्शमातृकास्थनीया चासीत् किन्तु कृतेऽपि प्रयासबाहुल्ये ताडपत्रेषु विलिखिता सा मातृका मया नाधिगता।

---

1. द इण्डियन हिस्टोरिकल क्वाटरली, वाल्युम-14, पृ० 744.

नाटकस्यास्य द्वितीया मातृका राष्ट्रिय-संस्कृत-संस्थानस्य [मानित-विश्वविद्यालयस्य] गङ्गानाथझा-परिसरेऽवस्थितपाण्डुलिपिग्रन्थागारे सुरक्षिता विद्यते। अस्याः मातृकायाः अधिगम·सं० 41052 वर्त्तते। प्राचीनकर्गदपत्रेषु श्रीमता वनमालिशर्म्मणा लिपिकारेण बङ्गलिप्यां विलिखितेयं मातृका 1-53 पत्रेषु पूर्णतां याति। अस्याः मातृकायाः प्रतिपृष्ठेषु 06 पंक्तयः, 78 अक्षराणि च सन्ति। मातृकायाः आकारश्च 41 × 6.5 cm विद्यते। 1696 शकाब्दे लिखितेयं मातृका मया आदर्शमातृकारूपेणाङ्गीकृता 'क' संज्ञया च संज्ञिता।

अनन्तरं वाराणसेय-संस्कृत-विश्वविद्यालयीय-सरस्वतीभवन-पाण्डुलिपि-ग्रन्थागारेऽपि नाटकस्यास्य द्वितीया मातृका पञ्चमाङ्कपर्यन्तमत एवापूर्णा मया समासादिता। अस्याः अधिगमसख्या-43747; क्रमसं० च 60 विद्यते। अस्यां मातृकायां गणनया 72 पत्राणि सन्ति। इयमपि मातृका बङ्गलिप्यामेवार्वाचीनकर्गदपत्रेषु विलिखिता वर्त्तते। अस्याः मातृकायाः प्रतिपृष्ठेषु 06 पंक्तयः, 44 अक्षराणि च सन्ति। मातृकायाः आकारः 13.1 × 4.1 इंच विद्यते। एतस्याः मातृकायाः अपूर्णत्वाल्लिपिकारस्याभिधानमविज्ञातमेव। मातृकेयं पाठ-भेददृष्ट्या मया 'ख' संज्ञया संज्ञिता।

अन्ततश्च राजस्थान-प्राच्य-विद्याप्रतिष्ठानेन प्रकाशिते पाण्डुलिपि-कोषग्रन्थे प्रकृतनाटकस्य मातृका जयपुरस्थ-महाराजा-संस्कृत-महाविद्यालयीये मातृकागारे समुपलब्धा। अत्याधुनिककर्गदपत्रेषु देवाक्षरेषु लिखितायामस्यां मातृकायां 1-79 पत्राणि सन्ति। प्रतिपृष्ठेषु 07 पंक्तयः 36 अक्षराणि च सन्ति। मातृकायाः आकारः 23 × 10 cm विद्यते। मातृकेयं 1703 विक्रमाब्दे आश्विनासितसप्तम्यां ढाकानगरे श्रीरामजीवनशर्म्मणा लिपिकारेण लिखितेति तत्रत्यपुष्पिकया सुस्पष्टीभवति। मातृकायाः अस्याः छाया-प्रतिकृतिः स्वयं जयपुरं गत्वा मया आनीता पाठ-भेददृष्टया च 'ग' संज्ञया संज्ञिता। तिसृणां मातृकानामाद्यन्तौ भागौ भूमिकालेखनानन्तरं स्पष्टप्रतिपत्यर्थं क्रमशः 'क' 'ख' 'ग' संज्ञया मुद्रापितौ विद्येते।

अत्रेतदवधेयम्—राष्ट्रिय-संस्कृत-संस्थानस्य जयपुरस्थपरिसरे साहित्य-प्रवाचक-पदमलङ्कुर्वतां डा० रूपनारायणत्रिपाठिमहाशयानां मार्गनिर्देशने गवेषकेण श्रीजितेन्द्रकुमार-अग्रवालेन 1991 ख्रिष्टाब्दे जयपुरस्थ-एकामेव मातृकामाधृत्य नाटकस्यास्य गवेषणापरकं सम्पादनं कृतम्। तदीयः शोध-प्रबन्धोऽपि मया चाक्षुषप्रत्यक्षीकृतः। तदध्ययनेन मयैतज्ज्ञातं यत्सम्पादनेऽस्मिन् मातृकान्तराभावाद् बहवोऽपपाठास्सन्ति ये खलु तुलाधिष्ठानेऽतीव रोकचेऽस्मिन्नाटके न्यूनतां जनयन्तः रसापकर्षकत्वमापादयन्ति।

तस्मात् कारणादुपर्युक्तमातृकात्रयस्य साहाय्येनास्य नाटकरत्नस्य सम्पादनकार्यं मया सुसाधितम्। मानितविश्वविद्यालयीयगङ्गानाथझा-परिसरस्य पूर्वप्राचार्यमहाशयानां प्राच्य-

प्रतीच्योभयभाषामर्मज्ञानां विद्वगोष्ठीगरिष्ठानां कल्पवृक्षकल्पानां डा० गयाचरणत्रिपाठि-महोदयानां कार्यकाले तेषामादेशेन एष जनः नाटकस्यास्य सम्पादन-कर्म्मणि प्रवृत्तः किन्तु नाटकेऽस्मिन् समागतप्राकृतस्थलानां संस्कृतच्छायाऽवशिष्टैवासीत्। तस्मादेव कारणात्तदानी-मस्य मुद्रणं न जातम्। साम्प्रतं हि चण्डिकाचरणचारण-निर्मलशेमुषीवशात्साहित्यशास्त्रे "ध्वन्यालोकाख्याकरग्रन्थोपरि "दीपशिखा-अनुस्वान" भाष्यारचनेन साहित्यशास्त्रीय विविधग्रन्थप्रणयनेन च सारस्वतसदनोद्भासकानां राष्ट्रपतिसम्मानेन सम्मानितानामस्मदीय-साहित्यगुरुवर्य्याणां डा० चण्डिकाप्रसादशुक्लमहाशयानां साहाय्येन नाटकेऽस्मिन् सभागत-प्राकृतस्थलानां संस्कृत-च्छाया सुलभा जातेतिकृत्वा तान् प्रति सविनयावनतस्सन् कार्त्तज्ञं व्याहरत्येष जनः।

साहित्यसुधाम्भोधाववगाहनेन विश्वविश्रुतकीर्त्तिमूर्त्तिनां सहृदयधुरीणानां का० प्राचार्यमहोदयानां डा० गोपराजूमहाभागानां सदाशयतावशादिदानीं नाटकरत्नमिदं प्राकाश्य-मानीयते। अतस्तेषामाधमर्ण्यं सुतरां सिद्धमेव। अस्मिन्नेव क्रमे व्याकरण-साहित्य-तन्त्र-षड्दर्शनशास्त्रनिष्णातानामेतद्विद्यापीठीय-प्राक्तनप्रवचकानां राष्ट्रपतिसम्मानेन सम्मानिता-नामस्मदीयगुरुकल्पानां डा० किशोरनाथझामहाशयानां तथा च निवर्त्तमान-परियोजनाधिकारिणां श्रीजीवेश्वरझा-शर्म्मणां बङ्गाक्षरेभ्यः देवाक्षरसंशोधने साहाय्याचरणे-नोपकारभारैस्सर्वथाऽवनतस्सन् क्रमशस्तान् प्रति कार्त्तज्ञं व्याहरत्येष जनः। प्रयागराज कम्प्यूटर्स-प्रेसस्य स्वामिनस्तत्रत्यानां कर्मकराणां मुद्रणनैपुण्येन स्वल्पेनैव समयेन प्रयोगविज्ञानमिदं मुद्रितं जातमतस्ते सर्वेपि धन्यावादभाजनानि सन्ति। मुद्रण-त्रुटिः सम्भाव्येतिकृत्वा क्षमायाचनैकशरणम्। अन्ततोगत्वा निम्नपद्येनैतत्प्रयोगविज्ञानस्य भूमिकालेखनेनात्रैवोपरम्यते।

**गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः।**
**शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति॥** "इतिशम्"॥

वसन्तपञ्चमी — विदुषां विधेयः

खिष्टाब्दः 2005 — झोपाह्वो डा० रामकिशोर

# श्रीमल्लक्ष्मणमाणिक्यदेवप्रणीतं
# विख्यातविजयं नाटकम्।

## ।। तत्र प्रथमोऽङ्कः ।।

[ अथ नान्दी ]

विक्रान्तिर्नारसिंही निशितनखमुखैः[1] फुल्लदैत्येन्द्रवक्षः[2]
क्ष्माभृन्निर्यातवेगोच्छलितघनरजः[3] क्लृप्तपङ्क्तिः स्रवन्ती।
पातु त्वां केसराग्रप्रपदनखशिखा[4] यौगपद्यप्रतानै-
रूर्ध्वाधः पीड्यमानप्रशिथिलविचलन्मध्यमब्रह्मडिम्बा[5] ।। 1 ।।

अपि च–

दृष्ट्वा सौमित्रिमन्तर्गतनिशितमहाशक्तिमुत्क्रान्त[6]धैर्य-
स्तच्छान्त्यर्थं तदैव त्रिभुवनविवरोत्सारिभिः शस्त्रजालैः।
उत्कृत्तैरुत्तमाङ्गैः रजनिचरपतेर्दिक्पतिभ्यो दशभ्य-
स्तीव्रामोदप्रदं वो[7] बलिमुपहृतवान् रामचन्द्रः पुनीताम् ।। 2 ।।

---

1. ०मुखनखैः०, ग।
2. ०क्षुण्ण, ख।
3. ०भूर्नि० क, ग।
4. ०श०, ख, ग।
5. ०म्भा ख।
6. ०न्ति० ग।
7. ०कृ० क, ग।

## [ प्रस्तावना ]

[ नान्द्यन्ते ] **सूत्रधार :** अलमतिविस्तरेण। अये! किमिदमपूर्व-वस्तुविलोकनादुत्साहपरी [णाहं][1] विगाहमान इव संवृत्तोऽस्मि?

[ किञ्चिदुद्ग्रीवमालोक्य ]

अहो! प्रबलघनघटासदृश[2] प्रतिभट[3]दन्तावलपटलघण्टाटोपटङ्कारतिर-स्कृतान्यध्वनयो दिग्विभागा वर्त्तन्ते? मथ्यमानमहार्णवनिर्घोषप्रतिम-प्रमुक्तनिनद नेमिनिस्यन्दन[4]वृन्दस्पन्दमानोच्छ्रितविविधपताकाविचित्रीभवति विष्णुपदाभोगः।

पवनपातिपीतिनिकरखुरक्षुण्णक्षौणीतलोच्छलितधूलिधूम्रायमान इवाद्य[5] प्रतिभाति प्रभाकरमण्डलः। भूयिष्ठपत्तिगणोद्भ्रामितचामीकर-शतचन्द्र[6]-चर्म्म-चमत्कार-सम्भावितसौदामिनी[7], वलयितजीमूतजृम्भितेव जगति[8] परिस्फुरति।

[ किञ्चिद्विमृश्य ] हैमन्तीय[9]परिक्रमणकन्दलित-कुतूहलाः क्षौणी भुजङ्ग[10]

---

1. ०हारं० क, ०नाहं० ख, ०वाहं० ग।
2. ख, ग। (मातृकायां नास्ति।)
3. ०टा० क, ख।
4. ०न्दवृ० ख।
5. इव० ख, ग।
6. चन्द्रक-ग।
7. ०म्नी ख।
8. ०ती क, ग।
9. ०हे० ग,
10. भुजा इवानु० क, ग, भुजङ्गानु० ख।

इवानुभूयन्ते। अद्वितीयतया किञ्चित्सम्भ्रान्तमिवात्मानं सम्भावयामि।

[ प्रविश्य सत्वरः ] पारिपार्श्विकः–[ सहसोपसृत्य ] भाव! विजयतां विजयतां जगदुत्तरकृति[1]मत्तया।

सूत्रधार : मारिष! विजयसम्भावनायाः विशेषः प्रस्तूयताम्?

पारिपार्श्विक : अद्य खलु कुरुक्षेत्रयात्रासमाहूतमही[2]मण्डल-मुकुट[3]माणिक्यभूतैर्भूपति-भिर्भारतायोधनभूविलोकन-प्रादुर्भूतोद्दीपनविभावैः सम्भूय सन्दिष्टा अस्मद् गुरवो मनोहरमिश्राः, यद्भ[4]वान् मनोहरतया विश्रुतोऽस्ति[5]। तदुत्साहस्थायि-प्रबन्धप्रयोगविधातृ[6]तयादृतोऽस्माभिर्नामार्था[7]नुहारिणीं क्रियां प्रतिपादयस्वेति।

सूत्रधार : [ सहर्षम् ] ततस्ततः।

पारिपार्श्विक : ततस्तत्र भ[8]वता वाग्वैदग्धीविशेषेण सन्तोषिता क्षितिपतिमण्डली, तदवलोकनाय कौतूहलव[9]त्यास्ते

सूत्रधार : [ सानु[10]मोदम् ] अवयवादितुल्यत्वेऽपि वाग्विशेषेणैव किमपि वैशिष्ट्य-

---

1. ०त्ति० ख।
2. ०महीपति० ग।
3. ०मुकुट० 'क' मातृकायां नास्ति।
4. यत्त्वं, ग
5. ऽसित, ग
6. ०वृ०, क, ख।
7. ०सा०, ग।
8. भगवता, क।
9. ०ला० ख;
10. सामोदम्, क, ख।

माधीयते। तथा हि-

समानाश्रय[1]जातीनां सुवक्त्रा[2] प्रियताश्रयः।

वीतसंख्यविहङ्गेषु कोकिलो हि वनप्रियः ।। 3 ।।

प्रतिष्ठितप्रयुक्तप्रस्तावना[3]विशेषश्रवणेनैव नव्यानां प्रगल्भताविशेषः परिस्फुरति। तत्किमुक्तं गुरुचरणैः?

**पारिपार्श्विक :** नृपनिवह[4]निदेशानन्तरं निवेदितं तत्र भवता शिष्योपशिष्यप्रणीतं प्रबन्ध-प्रयोग[5]मवलोकयतां संख्यावतां सन्तोषातिमात्रैरुपदेशकतयैव साम्प्रत-मुपयुक्तोऽस्मि। तदद्य तान् सर्वानाहूय महीमहेन्द्राणामाज्ञाकल्पलतया[6] आरामीकृत्य फलवत्तायां[7] प्रयत्नः प्रतिपादनीय इति।

**सूत्रधारः** [सोत्प्रासम्] तत्र भवता स्वीयस्कन्धावतारिततादृशभारोद्वहने[8] कस्तावद्धुरीणो मनसि कल्पितः?

**पारिपार्श्विक :** [सस्मितम्] प्रथमान्तेवासिनं विश्रुतकर्माणमन्तरेण कस्तावदीदृशः?

**सूत्रधार :** मारिष! पूर्वपक्षो मामेव स्पृशति। उत्तरपक्षस्तु परामर्शविषयः।

---

1. ०स्पद० ग।
2. ०क्त्रा ख, ग।
3. प्रस्ताव, ख, ग।
4. नृपतिनिर्व क,
5. मा०, ग।
6. ०ता० ख, ग।
7. ०त्तेषां प्रति०, क।
8. ग, मातृकायां नास्ति।

**पारिपार्श्विक :** भाव! यथा पूर्वस्तथैवापर:[1]।

**सूत्रधार :** यद्ययमेव[2] तदा नावतारितभारास्तत्र भवन्त:। यत:–

**शिष्येषु भारं विनियोज्य[3] तावद्**

**गुरुर्गुरूद्विग्नतयाभियुक्त:।**

**यावत्प्रियास्ते जगदुत्तराणां**

**भवन्त्यधृष्या: परिपन्थिनाञ्च[4]॥ 4॥**

**पारिपार्श्विक :** भाव! भवन्तमध्याप्य चिररात्राय निरुद्विजिता हि गुरवो वर्त्तन्ते। तत्स-न्दिष्टमप्यवगन्तुमर्हत्यायुष्मान्[5]।

**सूत्रधार :** अवहितोऽस्मि।

**पारिपार्श्विक :** **आपीय[6] श्रवणैर्गुणोत्करसुधामायुष्मतस्ते[7] मुहु:**

**स्फीता: क्षौणिभृतो[8] भवन्तमधुना द्रष्टुं समुत्कण्ठिता:।**

**तत्तादृक् परमोन्नतं कुरु-यश:स्तोमं प्रयासोज्झिता:**

**स्वर्वेश्या उपवीणयन्तु गगने हर्षाश्रुसिक्तो रस: ॥ 5॥**

तदलं पल्लवितेनेति।

---

1. ०पर:, ख, ग।
2. यद्येवमेव ख, ग।
3. ०यु०, ग।
4. नश्च, क।
5. ०प्य, गमातृकायां नास्ति।
6. आह्वीय, क, आत्मीय, ग।
7. ०तान्तन्मु० ग, तस्ते मृ?, ख।
8. ०भुजो, ग।

सूत्रधार : [सहर्षमञ्जलिं बद्ध्वा] संस्थापितः शिरसि गौरवः समादेशः मारिष!

तस्योपदेशामृतबिन्दुसेकै-
रुत्पल्लवा त्वद्विधकीर्त्तिवल्ली।
सत्पार्थिवस्नेहविचित्रपुष्पै-
रामोदितामातनुतां त्रिलोकीम् ॥ 6 ॥

पारिपार्श्विक : भाव! वयमपि भवता पुरवन्तो[1] भवामः।

यत्र योऽभ्यनुज्ञायते, तत्र तेनैव[2] यथासामर्थ्यमनुकारितया व्यवहर्त्तव्यम्।

सूत्रधार : मारिष! कतमस्तावत् प्रबन्धस्तत्र भवता प्रयोजनीयत्वेनादिष्टः?[3]

पारिपार्श्विक : मयैतत् पृष्टेनात्र स एव प्रमाणमित्यभिहितमाचार्येण।

सूत्रधार : [किञ्चित् सविस्मयं विमृशति।]

पारिपार्श्विकः भाव ! अदृष्टपूर्वो विस्मयस्तवायमवधार्यते।

सूत्रधार : मारिष! राजकानुरञ्जनीयो भागधेयप्रकर्ष:[4]सुलभतया न सम्भावनीयः।

पारिपार्श्विक : एवमेतत्, किन्तु भवानेव,[5] न वयमत्र सन्देहभाजः। तथा हि–

---

1. प०, ग।
2. क, ख, मातृकायां नास्ति।
3. ०नत्वे०, ख।
4. ०प्रकाशः, क, ग।
5. ०निति, ख, ग।

स्वयमतिमहिमान्वितो यदि स्या–

द्वहलगुणिभ्य[1] उपैति सत्प्रसादम्।

युवतिकुचतटोऽपि मौक्तिकेभ्यो

द्युतिमभिगच्छति हारतां गतेभ्यः॥ 7॥

**सूत्रधारः–** मारिष! प्रबन्धोऽपि तादृशस्तावदपेक्षणीयः।

**पारिपार्श्विकः–** अशेषप्रबन्धानामनुबन्धविधातुरत्रभवतश्चेतसि प्रकृष्टतया यः[2] प्रतिभाति, स एव प्रबन्धः प्रेक्षकाणामपि प्रमोद[3]पारावारसमुल्लासोपचयचन्द्रश्चचतुरिमाणमलङ्करिष्यति।

**सूत्रधारः–** मारिष! भूयिष्ठभूमहेन्द्रावलम्बनविभावप्रबन्धमन्तरेण राजानकमनोभिरञ्जनाय कोऽन्यस्तावद्भवितुमुत्सहते?

**पारिपार्श्विकः–** अत्र भवता भारतानुकारि[4] प्रबन्धः प्रस्तूयत[5] इति प्रतीमः।

**सूत्रधारः–** [सप्रश्रयम्] आम् मारिष! आम्।

चतुर्वेदोक्तिनिर्यासैर्व्यासेन ब्रह्मरूपिणा।

भारतामृतपाथोधिः परिमुक्तावधिः कृतः॥ 8॥

तस्य शीकरकल्पेन[6] वाग्वैदग्ध्येन साङ्कुरम्[7]।

कवयोऽन्ये यशोबीजं जनयन्तः प्रतिष्ठिताः॥ 9॥

---

1. ०हु०, क, ग।
2. [यः] 'ख'मातृकायां नास्ति।
3. ०सागर०, ग।
4. ०री, ख।
5. ०तामि०, ख
6. ०रूपेण, ग।
7. ०ङ्क० , क।

**पारिपार्श्विकः**– अत्र कः सन्देहः? महामुनिद्वयविनिर्मितरामायण–महाभारतवृत्तान्त एव कवितॄणामितरेषां भ्रान्तितमिस्रसमुत्सारणसहस्रकिरणः।

**सूत्रधारः**– मारिष! सम्यगभिहितम्।

**पुत्रद्वयमवाप्यैव विश्वरूपा सरस्वती।**

**आद्यं वल्मीकजन्मानं पाराशर्य्य[1]मपूर्वजम्॥ 10॥**

**पारिपार्श्विकः**– [2]अवरजतया देव्या वाचः किञ्चित् पाराशर्य्ये पक्षपातविशेषं[3] प्रतिपादयति भावः[4]।

**सूत्रधारः**– शान्तम्, शान्तम्। के वयं तयोस्तारतम्ये[5] त्रसरेणव? तथा हि–

**किं वाच्यो[6] भगवान्महामुनिरसौ वल्मीकजन्मा क्षितौ**

**वाग्देव्याः प्रथमप्रवेशकरणी[7] येनोपगीता ध्रुवा।**

**यस्योद्गीर्णगभीर–वक्रिमवचो[8] वैदग्ध्यमुग्धैः पदैः**

**साभून्निर्मल[9]रङ्ग[10]मञ्चनकरी व्यासोऽपि किं वर्ण्यते?॥11॥**

---

1. ०स०, क।
2. ०अव 'ग' मातृकायां नास्ति।
3. ०षः, ग।
4. भावः 'ग' मातृकायां नास्ति।
5. तावत्तस्य, ग।
6. ०च्यं, ग।
7. ० करगी, क, बकरी, ग।
8. ०तो०, क।
9. ०द्ध०, ख।
10. ०ङ्ग०, ग।

पारिपार्श्विकः– तदनुकारी कतमः प्रबन्धोऽनुसन्धीयते सतीर्थप्रतिपक्ष्येण[1]?

सूत्रधारः– यादृक् समुचितोऽयं समावेशः।

प्रेक्षावत्परितोषनिस्तुषमहामाणिक्यरत्नाकरः

प्राक्सत्पूरु[2]षपौरुषोत्कर[3]कथा-स्रो[4]तस्विनीभूधरः।

तृ[5]प्यच्चारण-चातुरी मधुकरी प्रागल्भ्यपुष्पाकरः

श्रीमल्ल[6]क्ष्मणभूपतेरभिनवस्तादृक् प्रबन्धोत्तरः ॥ 12 ॥

पारिपार्श्विकः– [सानुमोदम्] भाव!

आश्रयो[7] यस्य राजान[8]स्तस्य वीररसस्य चेत्।

प्रबन्धो भूभुजा ब[9]द्धस्तस्मिन्नौपयिकश्रमः ॥ 13 ॥

किञ्च–

यद्यपि महीमहनीयमहिम्ना तेनोपनिबद्धानि दृश्यकाव्यानि बहून्यनुव[10]र्त्तन्ते

1. ०तीक्ष्ये०, ख।
2. ०त्पुरू०, ख।
3. ०र्ष० क।
4. ०श्रो०, क, ख।
5. दृ० क, ग।
6. ०मान् ल० ख।
7. ०ये, क।
8. राजस्य, ख।
9. ०न्ध०, ख।
10. ०भूय०, ख, ग।

तथापि विशिष्टविशेषणैं'**विंख्यातविजयं**' नाम नाटकं कण्ठोत्थमिव[1] सम्भावितं भावेन।

सूत्रधारः– [सस्नेहस्मितं तन्मुखमवलोकयन् सबहुमानम्]

मारिष!

यद्गोत्रप्रथमेन केनचिदहो आकल्पमत्यायतै–[2]
बंद्धा[3] स्वीयगुणैः कुलक्षितिभुजां पद्मालयामन्दिरे।
यत्सभ्यैः कृतिभिः समस्तकविताशास्त्रार्थनिष्कर्षिभिः।
प्रत्येकं त्रिदशालयेश्वरगुरोः[4] पूर्णोपमारलङ्कृता॥ 14॥

अपि च–

न्यायाचार्यविशुद्धसन्ततिसमुद्भूतैः[5] षडङ्गश्रुति–
स्मृत्युक्तैः परितोपनीतविपदां मन्त्रैस्तथा सूरिभिः।
यद्गोत्रीयमहीभुजामहरहः सम्बर्द्धमानैर्यश–[6]
स्तोमैः[7] पूर्णमजीर्णनुन्नजठरं ब्रह्माण्डमुज्जृम्भते॥ 15॥

---

1. ०णो०, ख।
2. ०ल्य, ख।
3. द्ध्वा, ग।
4. सु०, ग
5. ०म्भू०, क।
6. ०णै:०, ग।
7. ०मु०, ग।

अपरञ्च–

यत्पूर्वाभिजनीयकाव्यमुदधिं संश्राव्य दिक्सुभ्रुव-

स्तस्मान्मौक्तिकमालिकाः प्रतिदिनं गृह्णन्ति तेनापि तत्।

प्रागल्भ्यादुपहृत्य[1] वृत्रवनिता[2] वैधव्यदीक्षागुरो-

रेकैकेन परार्द्धमौक्तिक[3]लिपेरासादिताः प्रीतयः ॥ 16 ॥

अपूर्वा तादृशी तेन कर्णामृत[4]विधायिनी[5]।

भविता सर्वसम्प्री[6]त्यै गुणेन विहिता कृतिः ॥ 17 ॥

[नेपथ्ये] आश्चर्यम् आश्चर्यम्। आर्यफाल्गुनेन[7] विहिता तादृशी[8] मनोहराकृतिः[9] कर्णस्याभरणविधायिनीति सम्भावनया केन[10] विप्रलब्धोऽयं भरताचार्यः[11]?

सूत्रधारः– [ससम्भ्रममाकर्ण्य] अये मारिष!

---

1. ०कृ०, क।
2. ०त्य०, ग।
3. ०निधे०, क।
4. ०म्वि०, क।
5. कर्णस्य अमृतविधायिनी अमरणविधायिनीत्यर्थः, क।
6. ०म्पृ०, क।
7. फाल्गुनेन = अर्जुनेन, क।
8. 'ख' मातृकायामधिकः पाठः।
9. 'ख' मातृकायां नास्ति।
10. 'क' मातृकायां नास्ति।
11. भवतार्यः, ग।

धीरकर्कशस्वरः कोऽयमस्मानधिक्षिपन्नित[1] एवाभिगच्छति?

पारिपार्श्विकः– सत्वरमवधारयामीति [निष्क्रान्तः]

[पुनर्नेपथ्ये] आश्चर्यमाश्चर्यमित्यादि पुनः पठति।

सूत्रधारः– [आकर्ण्य] अये! कर्णाधिक्षेपि[2] वचनादवधार्यते; पाण्डवानां कोऽपि भविष्यति।

पारिपार्श्विकः– तत्रैव कुमारकर्णस्य मुक्तिविधायिनीत्यभिदधानोऽयं न विप्रलब्धः[3]।

सूत्रधारः– [आकर्ण्य] साधु मारिष! साधु।

उक्तिविशेषो[4] हि बोद्धृविशेष[5] एवार्थविशेषं प्रतिपादयति।

[पुनस्तत्रैव नेपथ्ये] साधु भरवपुत्र[6]! साधु।

अत्र कः सन्देहः?

[7]यस्योद्दण्डभुजप्रचण्डपटुता प्रीतोऽभवद् धूर्जटि-

र्यत्सारथ्यमलङ्करोति मुरभित्सामर्थ्यसन्तोषितः।

---

1. ०न् वि०, ग।
2. ०प०, ख।
3. ०म्भविरोधोक्तिः, क।
4. ०ऽपि, क; ०षेऽपि, ग।
5. ०द्धु०, ख।
6. ० त०, ख, ग।
7. अ०, ख।

यस्यान्योन्यमिषद्[1]द्विषत्सुवदना-वाष्पाम्बुनो[2] स्पर्द्धया

धारे तस्य कृतिर्भविष्यति न किं राधेयमृत्युप्रदा? ॥ 18 ॥

शिवाः सन्तु ते पन्थानः। मयापि गृहीतमङ्गलवाचिकेन महाराजनिदेशः[3] प्रतिपादनीयः।

[पुनः प्रविश्य सम्भ्रान्तः]

पारिपार्श्विकः– भाव! महाराजयुधिष्ठिरनिदेशात्[4] कुमारसहदेवः श्रीकृष्णभवनाभिमुखं प्रतिष्ठमानो भवच्छ्लोकार्थमन्यथाभिमन्य किञ्चिदमर्षापन्न इवासीत्।

सूत्रधारः– तत्परितोषणौपयिकम[5]धरोत्तरमपि भवतः श्रुतम्? [उक्तिविशेषेत्यादि पुनः पठति।]

पारिपार्श्विकः– वाच एव विदग्धानां भवन्ति कामधेनवः।

भूयोऽभि[6]धार्थसम्पतिः प्रसूतिकृ[7]तलक्षणाः ॥ 19 ॥

सूत्रधारः– प्रस्तावोचितमभिहितं भवतैव। तस्मादस्माकमत्रावस्थितिर्निष्प्रयोजना। [इति निष्क्रान्तौ]

---

1. ०षु०, ख, ग।
2. ०नोः ख।
3. ०र्दे०, क।
4. ०र्दे०, क।
5. ०मौ०, ग।
6. ०योविधा०, क।
7. ०ति०, क।

[ विष्कम्भकः ]

[ततः प्रविशति सहदेवः]

**सहदेवः–** सहसा '**यस्योद्दण्डेति**' पुनः पठित्वा महाराजसन्देशं तावद् भगवतः श्रीकृष्णस्य निवेदयामीति। [प्रविक्रम्यावलोक्य च]

अये! आगतवानस्मि भगवतो[1] गोपुरं गरुडकेतोस्तद् विज्ञातस्य पुरप्रवेशः[2] समीचीनः। कः कोऽत्र भोः?

[प्रविश्य] **प्रतीहारः–**कुमार! कुतोऽयमागमनप्रयासः?

**सहदेवः–** भगवन्तं प्रणन्तु[3]मिच्छामि।

**प्रतीहारः–** तत्किमत्र विलम्बेन? भगवानपि कृताह्निकः किरीटिभवनं प्रति गमनोत्कण्ठितो वर्त्तते।

**सहदेवः–** तद्भवानग्रतो भूत्वा[4] ममागमनं विज्ञापयतु, अहमाप्यागच्छामि।

**प्रतीहारः–** यथाज्ञापयति कुमारः। [इत्येकान्ते स्थितः।]

[ततः प्रविशत्यासनस्थो भगवान् श्रीकृष्णः]

**श्रीकृष्णः–** [सविमर्षम्]

**अपि चलति समृद्धिं द्रोण-भीष्म-प्रशान्तः**
**सपदि कुरुनृपीयां[5] वाहिनीमुज्वलाभाम्।**

---

1. भगवतो, ख।
2. ०र:०, ग।
3. ०मतु०, क।
4. कृ०, क।
5. ०पती०, ग।

**प्रकटयति विवश्वत्सूनुरुद्यत्प्रताप-**

**स्तपनविधुविमुक्तां द्यामिवाग्निर्द्दवोत्थः[1] ॥ 20 ॥**

[किञ्चित्सोत्प्रासम्] हताशदुर्योधन! यस्य तेजसा साम्प्रतमप्यपरिमुक्तावलिप्तपद्धतिरसितमपि मया प्रभञ्जनेनोत्थः शरधाराभिरञ्जितः धनञ्जयघनस्तूर्णं कर्णाग्निं शमयिष्यति, किन्तु नानुपयुक्तो भवतस्तमाश्रित्या[2]वलेपः। स खल्वीदृश एव दुराधर्षः प्रागासीत्। सम्प्रति प्रियसुहृदः सव्यशाचिनः साध्यभूमिं बहुभिरुपायैरुपनीतः।

तथा हि–

**शप्तः क्षौणिसुरेण मत्[3]प्रहितया कुन्त्याऽभयं याचितः**

**पुत्राणां विजयादृते मघवताप्यादाय वर्म्म स्वयम्।**

**दत्ता-शक्तिरमुष्य मन्त्रविधिना नक्तञ्चरे भ्रंशिता[4]**

**यद्द्रोगीन्द्रमहास्त्रमस्ति तदपि क्लैव्यं मया नेष्यते ॥ 21 ॥**

**प्रतीहारः–** [उपसृत्य] भगवन्! कुमारसहदेवो भगवन्तं प्रणन्तुमुपागतः।

**श्रीकृष्णः–** तस्यागमने कोऽयमत्र विज्ञापनावसरः?

**प्रतीहारः–** [किञ्चिदुपक्रम्य] कुमार! एष भगवान् भवन्तं प्रतीक्षते[5]। तदुपसर्पतु[6] कुमारः।

---

1. ०र्दवेश्वः, क, ०र्देवो०, ग।
2. ०तोऽ०, क।
3. ०स०, क।
4. श्रम्पि०?, क।
5. ०क्ष्य०, ख।
6. ताव०, ख।

सहदेवः— [उपसृत्य विनयनम्रः पादौ स्पृशति।]

श्रीकृष्णः— [सस्नेहं हस्तमभिलम्ब्य सन्निधावुपावेश्य] वत्स! कुतोऽयमागमनश्रमः?[1]

सहदेवः— भगवत्पदारविन्दवन्दनमावश्यकमस्माकम्,[2] सम्प्रति महाराजनिदेशात्।

श्रीकृष्णः— महाराजस्तावत्किमध्यवसायः?

सहदेवः— कौरवकण्टकादुपेतदूतमुखाद्[3][4] वृत्तान्तन्तमवधार्य किञ्चिद्विज्ञापनाय भगवदुपकण्ठं प्रस्थापितोऽस्मि सहाराजेन।

श्रीकृष्णः— तदशेषतः श्रोतुमवहितोऽस्मि।

सहदेवः— महाराजेनैतद् विज्ञाप्तम्—[5]

सेतुस्त्वं द्विषदम्बुधौ सुरतरुः सम्पत्फलाप्तौ तम-

स्तोमध्वान्तविधौ[6] सहस्त्रकिरणश्चन्द्रोऽसि तापात्यये।

दैवोत्पन्नविपद्घटागुरुगदे[7] लक्ष्मीविलासो[8] रसः

प्राणाः पाण्डवसुन्दरेश्वरभुवां[9] देहे किमन्यत् परम्॥ 22॥

---

1. ०ऽत्रा०, क।
2. ०वृ० क।
3. ०ट०, ख, ग।
4. ०द्यू०, ग।
5. ०ज्ञ०, ख, ग।
6. ०ध्वस्ति०, ख, ०ध्वस्त०, ग।
7. ०प०, ग।
8. ०षो०, क।
9. ०न्ध०, ख.

श्रीकृष्णः– संवर्द्धनीयेषु महत्तराणामेवम्विध एव स्नेहालापः। अपरमपि[1] किञ्चिदादिष्टम्?

सहदेवः– तत्रत्यवृत्तान्तमवधार्य सम्प्रति कर्त्तव्ये भगवानेव प्रमाणम्।

श्रीकृष्णः– किन्तत्[2]?

सहदेवः–

विषण्णाः कुरवो नैव निधने द्रोण-भीष्मयोः।
यदयं ध्वजिनीनाथः कर्णोऽभूत्क्लृप्तसौहृदः ॥ 23 ॥

श्रीकृष्णः– [स्वगतं विमृश्य] चिरस्य कर्णादेव सम्भ्रान्तो वर्त्तते धर्मराजः। मयापि साम्प्रतं तुच्छतया प्रियसख[3]विजय! तादृशभारस्य प्रतिपत्तिर्नौपयिकी।

[प्रकाशम्] वत्स!

यद्वैरं कुरुपतिना कृतं भवद्भि-
र्न द्रोणो न च स[4]रितः सुतोऽपि हेतुः।
तस्मिन्[5] यद्भु[6]जबलमेव मु[7]ख्यबीजं
सोऽद्यापि प्रतपति तस्य को विषादः ॥ 24 ॥

---

1. अपि 'क' मातृकायां नास्ति।
2. ०मुत, क।
3. ०ख्य, क।
4. ० वि०, क।
5. तत्र, क।
6. ०रु०, ख।
7. सख्य, क।

चिररात्राय चिन्तितोऽयमर्थः कश्चिद्विशेपश्चेत्[1] प्रस्तूयताम्।

सहदेवः– तेन सैनापत्यमधिष्ठितवता[2][3] सारथिसामर्थ्येनैव मत्तो विशिष्टः किरीटीत्युपयापितो[4] दुर्योधनः प्रणयविशेषैरनुनीय[5] तत्सारथ्ये मद्रराजं नियोजितवान्।

श्रीकृष्णः– [स्वगतम्] एतदप्यभीष्टफलसिद्धये[6] फाल्गुनस्य रक्षाबीजं भवादृशाञ्च[7]।

[प्रकाशम्] अहो! उपयुक्तोऽयं चिन्ताभारः–

मद्राधिपं[8] जगत्प्राणप्रेरितं भुवनोद्भटम्[9][10]।
अद्य कर्णमकूपारमवगच्छामि दुस्तरम्॥ 25॥

सहदेवः– [सप्रणयस्मितम्] भगवन्!

यस्याभूद्भुजदण्डवीर्यनिकषश्चन्द्रार्द्धचूड़ामणिः
शत्रुः[11] शस्त्रतनूनपातिततनुस्पर्शात्पतङ्गक्रियाम्।

---

1. किञ्चि, ख।
2. ०से०, क।
3. ०तिष्ठता, ग।
4. ०नु०, ख।
5. ०मी०, ग।
6. 'फल' 'क' मातृकायां नास्ति।
7. ०श०, क।
8. ०प०, क, ख।
9. भ०, क।
10. ०ट:, क।
11. ०क्र:, क।

किम्वान्यज्जगदेकमङ्गलगुरुस्त्वं कर्णधारः स्वयं

यस्येदृग्विजयस्य कर्णजलधिस्तस्यापि किं दुस्तरम्[1]॥26॥

श्रीकृष्णः– वत्स! किमुच्यते? स तावदचिन्त्यमहिमसम्भार[2]प्रस्त[3]वनमुखरिताशेष-भुवनलोकः किरीटिमाली, तथाप्यौ[4]षधिरि[5]ति सुहृदां सांशयिकताफल-निष्पत्यनन्तरमेव निर्वृतिं विवृणोति। किन्तु सोऽपि तादृगनिर्वचनीयः कोऽपि[6]। पश्य–

आश्रित्य यद्दोर्गिरिकूटदुर्गं

राजन्यवर्णार्थहरः कुठारः।

अपास्ततेजः क्षितिमण्डलन्त-

त्स्वतेजसा प्रज्वलितञ्चकार॥ 27॥

स एव त्रिपुरान्तकनितान्तप्रियान्तेवासी भगवान् भृगुपतितिलकः, सावयवचापश्रुतीनां यस्यासीदुपदेष्टा। अपि च–

काशीपुर्यामहंयुक्[7]क्षितिपसमुदयप्रौढदोः सारसिद्धौ

वृत्तिं कुम्भोद्भवीयां विद[8]धनुपदं यो[9] जरासन्धसन्धिम्।

---

1. ०रः, ख, ग
2. ०व०, क।
3. ०स्ता०, ग।
4. ०भ्यो०, ख।
5. ०व, ख, ग।
6. कोऽपि, 'ख' मातृकायामधिकः पाठः।
7. ०क्, 'ग' मातृकायामधिकः पाठः।
8. ०म०, क।
9. संधा, ख।

**दर्पादुद्घाट्य दोर्भ्यां पुनरपि सकृपः सन्दधे सूतसूनु-**

**र्यस्य प्रत्यर्थितां स प्रथयति समरे सम्भ्रमः किन्नु[1] तस्य ॥ 28 ॥**

**सहदेवः–** [स्वगतम्] आर्य! धनञ्जयेनोद्धारणीया धूर्निर्भरगुरुतया निर्दिश्यते भगवता[2]।

[प्रकाशम्] भगवन्! बहुधा तत्र भवता श्वेताश्वेन संगच्छमानस्य तस्य पराभूतिरेवानुभूता[3]।

**श्रीकृष्णः–** वत्स! मर्यादागाम्भीर्यभाजां तादृशि समय एव सामर्थ्यप्रकर्षः प्रतीयते।

तथा हि–

**विप्रेणैकेन यः पूर्वं परिपीतो हि लीलया।**

**स एव किल कल्पान्ते जगत्पिवति वारिधिः ॥ 29 ॥**

**सहदेवः–** भगवन्! एतादृग्विस्मयविसंस्थुल[4]मनास्तत्र भवान् धर्मरोजोऽपि?

**श्रीकृष्णः–** वत्स! दूरदर्शिनी हि प्रज्ञा प्रभविष्णुनाम्। किन्तु तस्य धर्मेणैव सर्वमभीष्टं साधयिष्यते इत्येवमेव मद्वाचिकं पुरोगच्छता भवता नृपतिपुरस्ता- न्निवेदनीयम्। अहमपि विजयद्वितीयो महाराजं प्रमोदयिष्यामीति। [यथायथं निष्क्रान्तौ।] [इति विष्कम्भकः]

[ततः प्रविशति सहदेवनेनानुगम्यमान[5] आसनस्थो[6] धर्मराजः, वेत्रपाणिः सविनयपुरोवर्ती प्रतीहारश्च।]

**राजा–** ततस्ततः।

---

1. न्न, क।
2. ०ताम्, क।
3. ०भृ०, क।
4. ०ष्ठु०, ख।
5. तनूगम्यमान? ग।
6. ०नो, ख।

**सहदेवः**– ततो विजयद्वितीयो महाराजं[1] प्रमोदयिष्यामीत्यभिधाय तत्र भवद्भवनं प्रति प्रस्थितवान् श्रीकृष्णः[2], अहमपि तन्निदेवशात्पुरस्तादागत्य तद्वाचिकमावेदितुं[3] [आगतवान्] पूज्यचरणेषु।

**राजा**– प्रतीहारः! मद्वचसा वत्सौ[4] वृकोदर-नकुलावुच्येताम्–

धृष्टद्युम्न-सात्यकिप्रमुखाऽस्मद्वीरसमुदाय[5]-सज्जतया[6] सेनया परिवृत्तौ भवन्तौ पुरस्तादास्कन्दनक्षेत्रमासादयेताम्। अहमपि कृष्णार्जुनाभ्यामनुपदमागतवान् इत्यवगम्यताम्।

**प्रतीहारः**– यथा आज्ञापयति देवः [इति निष्क्रान्तः]

**राजाः**– वत्स सहदेव! सम्यगभिहितं भगवता श्रीकृष्णेन। पश्य–

**द्रोणान्न वैरमुदभून्न पितामहाद् वा**
**तौ विश्रुतावुभयपक्षसमीक्षितारौ।**
**दुर्योधनप्रणयवृंहितवीरदर्पः**
**कर्णो हि नः कुलतरोः करपत्रकल्पः॥ 30॥**

**सहदेवः**– महाराज! स चाप्यचिरमेव स्वकर्मफलभोगभाजनं भविता।

**राजा**– सहदेव! वत्सवीभत्सोर्वात्सल्येनैव स तावदेतावतीं प्रतिष्ठामधिष्ठितवान्।

---

1. ०जः?, ग।
2. 'श्रीकृष्णः', क मातृकायां नास्ति।
3. ०दितवान्, ख, ग।
4. ०त्स्यौ, क।
5. ०द०, ग।
6. ०ङ्ग०, ग।

सहदेवः– आर्य! धनञ्जयस्यापि कर्णं प्रति वात्सल्यमभिहितवान् महाराजः।

राजा– वत्स! क्रियापरम्परयैवाभिधीयते।

तथा हि–

राधेयः करणं बधे प्रथमतश्छित्वाभिमन्योर्धनुः
सिन्धुक्ष्माभृतिजम्बुके ह[1]विरिव क्रोधाग्निमुत्क्षिप्तवान्।
दृष्टवा भीममयुक्तवाक्यवि[2]शिखैस्तेनातिमूर्च्छायितं
तत्पुत्रं निहतञ्च तत्र कृतवानौदास्यमेवार्जुनः॥ 31॥

सहदेवः– महाराज! येन तेनापि सह तुलाधिष्ठाने [3]प्रतिष्ठितस्य सावधानेनैव प्रवृत्तिः।

तथा हि–

धनुर्वेदाचार्यः स्वयमपि पुरान्धक-रिपुः
[4]प्रसक्तौ विध्वस्तौ [5]किमपि कृतवान्नोपकरणम्।
[6]शताङ्गोऽभूद्गोत्रा विधि-रज-नियन्ता रथहया
दिगीशाः किम्वान्यद्यदिह वनमाली हि विशि[7]खैः। 32॥

---

1. ०रि०, क, ग।
2. ०भि०, ग।
3. 'प्रतिष्ठितस्य' ग मातृकायां नास्ति।
4. ०क्तो० क, शक्तौ, ग।
5. ०मिव, ख, ०मिति, ग।
6. स०, क, ग।
7. ०खः, ख, ग।

राजा— वत्स! पारमार्थिकोऽयं न मे विकल्पः। किन्त्वसमाप्तप्रयोजनतया[1] व्यामोह्ये।

[इत्यर्धोक्ते]

प्रतीहारः— [प्रविश्य] [शिरसा प्रणम्य] महाराज! श्रीकृष्णधनञ्जयौ द्वारमध्यासाते।

राजा— तत् प्रतीक्षयैव वर्त्तामहे, शीघ्रं प्रवेशय।

प्रतीहारः[2]— यथाज्ञापयति देवः। [इति निष्क्रान्तः]

ततः प्रविशतः प्रतीहारेणादिष्टवर्त्मना[3] श्रीकृष्ण-धनञ्जयौ]

श्रीकृष्णः— सखे! सव्यशाचिन्! किञ्चिद्विज्ञाप्यमवधेहि।

धनञ्जयः— अवहितोऽस्मि।

श्रीकृष्णः— निरातकवचासुरैर्विकटकालकेयादिभि[4]-
हिरण्यपुरवासिभिर्बलिभिरप्यशेषास्त्वया।
कृताः समरकैतवैः[5] क्रतव इष्टदीक्षारता[6]
भवन्त्यकृतदक्षिणा यदयमस्ति राधात्मजः॥ 33॥

---

1. ०न्तु, क।
2. ०री?, ख.
3. ०ना०?, ख।
4. ०वा०, ख, ग।
5. ०र०, क, ग।
6. ०व०, क, ग।

धनञ्जयः— [सप्रश्रयम्] भगवन्!

राधाचक्रं द्रुपदनगरे यन्मया द्राग्विभिन्नं

दैतेयास्ते त्रिदिवजयिनः प्रापिता यत्प्रशान्तिम्।

यत्कौरव्याः समिति-विहिता गोग्रहे गोत्वभाज-

स्तत्सर्वन्ते त्रिभुवनगुरो![1] स्नेहबिन्दुप्रभावः॥ 34॥

स एव साम्प्रतं भगवान् पुरस्तात् प्रतिपद्यते। उभयथैव मदीया[2] प्रयोजन-सिद्धि:—

प्रतिगृह्णामि किन्तादृग् यशो वा जगदुत्तरम्।

सान्द्रा[3]नन्दं भवेज्ज्योतिः स्वरूपं वा महत्पदम्॥ 35॥

श्रीकृष्णः— [सस्नेहस्मितं धनञ्जयहस्तमवलम्ब्य[4]]

सखे! उदात्तवीरौपयिकस्ते वाग्विलासः किन्तु कर्णात् सातिशयं सम्भ्रान्तो धर्मराजः पौरुषोत्कर्षानुहारिणा वचसैव व्यवस्थापनीयः। अन्यथा समरमपि विहातुमुत्सहिष्यते। यतः—

वरं स्वदाय-प्रतिमोचनं भवेद्-

वरं प्रवासो[5] विपिनेऽपि तादृशः।

---

1. ०रु०, ख, ग।
2. ०य०, क।
3. ०व०, ख, ग।
4. ०लोक्य, ग।
5. सोऽपि वनेऽपि, ग।

न सूतसूनोः कुपितस्य सङ्गरे[1]

प्रयाणमस्मन्नृपतेरभीप्सितम् ॥ 36 ॥

अपि च–

केवलं त्वद्भुजवीर्यमाश्रित्य समरमारभमानस्य[2] भवन्तमुपेक्षकमिव सम्भावयतः[3] क्षौणीभर्त्तुर्मनोवैकल्यं राधेयबाधनेनैव निराकर्त्तुं भवान् भविता समर्थः। अन्यथा गुरुजनस्य मन्युरणीयानपि गरीयांस्ते मनस्तापाय प्रतिपत्स्यते।

प्रतीहारः– एष महाराजस्तावदत्र भवन्तावायुष्मन्तौ प्रतीक्षते।

[तावुभावुपसृत्य पादौ स्पृशतः]

राजा– [ससम्भ्रममासनादुत्थाय संस्पृष्टचरणे[4] हस्ते श्रीकृष्णं गृहीत्वा निर्भरं समाश्लिष्य धनञ्जनयस्यापि शीर्षं समाघ्राय तावुभावुपकण्ठमुपवेशयन् सबहुमानं श्रीकृष्णं निर्वर्ण्य]

भगवन्! देवकीमातर्यत्किञ्चिद्विज्ञाप्यं सहदेववदनेनैव विज्ञापतिम्-

कीदृशो वा त्वयि विज्ञापनावसरः? यतः–

यद्यत्परोक्षं प्रतिभाति यस्य

तदेव तस्मै प्रतिवेदनीयम्।[5]

---

1. मन्दिरे, .।
2. ०ण०, ख, ग।
3. ०न्तः, ख।
4. ०अ०, ख, ग।
5. ०परि०, ख।

त्रिलोकबिन्दोर्भवति[1] त्रिलोकी

तदैव[2] कुक्षौ परिवर्त्तमाना ॥ 37 ॥

**श्रीकृष्णः–** महार्घतामधिरूढेन धर्मेणैव भवता[3] क्रीता: प्रार्थनीयनिदेशा[4] वयं वर्त्तामहे।

**राजा–** [सविनयस्मितम्]

जगन्नाथेन त्वया नाथवतामस्माकमसम्भ्रान्तानामपि।

भवन्मायाभियुक्तेन मनसा क्वचित्कदाचिदुत्स्वप्नाप्यते[5] ॥ 38 ॥

**श्रीकृष्णः–** महाराज! भवत्सम्भ्रमस्य पदार्पणाय न सूक्ष्ममपि स्थानं प्रतिसन्धीयमानमालोक्यते। यतः–

धर्मस्तव सुरशाखी तादृश एव वर्द्धितो जयति।

यद्यदभीष्टं कुरुषे तत्फलनिष्पत्तिनिष्णातः[6] ॥ 38 ॥

अपि च–

यस्योद्गीतैस्त्रिदिवनगरीनागरीणां मुखेन्दु-

ज्योत्स्नाकल्पैर्विसृमरयशःसञ्चयैः[7] संस्रवद्भिः।

---

1. ०त्रिकाल०, ख, ग।
2. ०दे०, क।
3. ०ता:? ख, ०तां, ग।
4. ०र्दे०, क।
5. ०य्य, ख।
6. ०र्णेतुः, क, ०ष्ठा०, ग।
7. ०श्र०, ख, ०ञ्चर० ग।

दृग्वृन्दैः[1] स्याच्छशिमणिमयस्तम्भवज्जृम्भजेता[2]

सोऽयं योधः क्षितिप! भवतः सैनिकाग्रे किरीटी ॥ 39 ॥

धनञ्जयः— [सविनयमञ्जलिं बद्ध्वा]

प्रसादात्तव गोविन्द! गतोऽस्मि[3] गणनीयताम्।

शिलापि दाहिकां शक्तिं धत्ते तपनतेजसा ॥ 40 ॥

राजा— भगवन्! सभ्यगभिहितं वत्सवीभत्सुना। तथा हि—

धर्मे[4] स्थितोऽहमपि नैव ममानुजन्मा

भीमोऽपि नैव बलवान्न च फाल्गुनोऽपि।

धन्नवी यमावपि न वैनयिकौ[5] त्वयैव

पञ्चेन्द्रियाणि मनसैव[6] वयं प्रयोज्याः ॥ 41 ॥

सहदेवः— महाराज! समरसमयस्तावदतिभूमिमधिरोहति। आर्य! भीमसेन-नकुलयो-र्भाराशयः प्रतिभाति।

राजा— वत्स! सम्यगभिहितम्।

[प्रतीहारं प्रति] गच्छ, शीघ्रमादिश्यन्तामभियुक्ताः, यानानि सम्विधीयन्तां,

---

1. सृ०, क।
2. ०ज्ज०, ख; ०ज्र० ग।
3. ०स्मिन्० क।
4. ०र्म०, ग।
5. ०पथि०, ग।
6. ०से०, क, ख।

दुन्दुभिध्वनिभिरपि सहवर्तिनोऽ[1]धिगतवृत्तान्तीक्रियन्ताम्।

**प्रतीहारः–** यथादिशति देव इति, [निष्क्रान्तः।]

**राजा–** भगवन्! मन्त्रितमद्य सुयोधनस्य समधिगतम्?

**श्रीकृष्णः–** किन्तत्?

**राजा–** धनञ्जयसांमुख्ये संसप्तकान् संस्थाप्य मामेव बाधितुं राधेयमभियोजितवान् सुयोधनः।

**श्रीकृष्णः–** असम्भावनीयोऽ[2]यमर्थः। वत्स सहदेव! यावत् सव्यशाची संसप्तकान् संक्षिप्य कर्णाभिमुखं प्रतिपद्यते, तावद्भवद्भिः, सम्भूय महाराजानुवर्तिभिर्भवितव्यम्।

[धनञ्जयं प्रति] सखे विजय! अद्यैव भारतायोधना[3]नामशेषपरिश्रमः।

यतः–

कौरव्यं[4] भवनं युगान्तपवनैर्युष्मादृशैर्घर्षितं
यद्दोस्तम्भविलम्बि साम्प्रतमपि स्थैर्य समालम्बते।
आबाल्याद् भवता समं वितनुते यो द्वन्द्वयुद्धस्पृहां
तनैवाद्य विभावयामि भवतस्तादृक् तुलारोहणम्॥ 42॥

---

1. ०ऽव०, ख।
2. ०म्भवी नायमर्थः, क, ग।
3. ०नां परीणामः, ग।
4. गान्धारेर्भ०, ग।

**धनञ्जयः–** भगवन् सुहृद्वत्सल! अत्र न कस्यचित्सम्भ्रमः। यतः–

**द्वयमेव फलंश्लाघ्यं क्षत्रिया भ्रूणभूरुहः।**
**शस्त्रपूता भवेन्मृत्युर्ग्रहणं वा जयश्रियः॥ 43॥**

अपि च–

**पुरस्तव द्वन्द्वविधायिनो नौ[1]**
**न स्वार्थशून्यो भविता प्रयासः।**
**एकेन कीर्त्तिप्रमदापरेण**
**सम्प्राप्यते मुक्ति सरोरुहाक्षी॥ 44॥**

**श्रीकृष्णः–** तत् कालयापनमविधेयम्[2]। उत्तिष्ठ महाराजचरणरेणुं सन्नाहीकृत्य विजयाय प्रस्थीयताम्।

**धनञ्जयः–** [उत्थाय धर्मराजपादौ[3] स्पृशति।]

**राजा–** [सस्नेहं धनञ्जयहस्तं गृहीत्वा अन्तर्वाष्पजर्जरस्वरं श्रीकृष्णं प्रति]

विदितमेवैतद् भगवतः, स दुरात्मा वत्सेन वीभत्सुना[4] द्वन्द्वयुद्धमप्रतिजानानः[5] समभिवर्त्तते। तदद्य पाण्डवानां उच्छ्वसितमयं त्वयि निक्षेप इव संस्थाप्यते इति। [श्रीकृष्णहस्ते धनञ्जयहस्तं[6] समर्पयति।]

---

1. ०न्नौं०, ग।
2. ०भि०, क।
3. ०महा०, ख।
4. ०ना सह, ख, ग, ०मह० ग।
5. ०मप्रति०, ख।
6. क, मातृकायामधिकः पाठः।

श्रीकृष्णः— [सप्रश्रयं गृहीत्वा] महाराज!

कृष्णे जीवति कृष्णस्य शङ्कनीयो न विप्लवः।
कुतश्चन्द्रमसि स्फीते मयूखस्य विपर्ययः ॥ 45 ॥

[इति सर्वे उत्तिष्ठन्ति]

[नेपथ्य] द्वास्थिता[1]:—

उड्डीयन्तां[2] पताकाः पवनपरिचयाच्चित्रयन्तां विहायः
संयोज्यन्तां शताङ्गाः पतगपतति जवैः साधुभिः सैन्धवानाम्।
स्व स्व स्थानान्निरीक्ष्य प्रणतिविधियुषस्तिष्ठतः क्षौणिपालाः।
प्रेष्टुं प्रत्यर्थिसार्थं भवति बहिरयं धर्मवित् सार्वभौमः ॥ 46 ॥

[सर्वेषु परिक्रान्तमुद्यतेषु[3] नेपथ्ये दुन्दुभध्विनिः]

श्रीकृष्णः— [सहर्षं राजानं प्रति]

कल्पान्तोद्भ्रान्तवातप्रकरपरिचय[4]क्षुब्धसप्तार्णवाम्भः
प्रक्रान्तिस्फूर्जदुर्ज्जस्वन्नि[5]नदपरिस्पर्द्धि मूर्च्छं[6]न्निनादः।
गर्जज्जीमूतकल्पः[7] सुभटगजघटां हर्षयंस्ताड्यमानः
प्रत्यग्रं शात्रवाणां प्रथयति निधनं दुन्दुभिस्ते नरेन्द्राः ॥ 47 ॥

[सर्वे हर्षं नाटयन्ति]

---

1. द्वाः०, ख।
2. ०च्छ्री०, ख।
3. ०क्रन्तु०, ख, ०क्रमन्तु०, ग।
4. ०र०, ख।
5. ०न०, क; ०ल०, ग।
6. ०र्च्छा नि०, क।
7. ०स्व०, क, ख।

[पुनर्नेपथ्ये वैतालिकाः]

श्रुत्वा तादृग्घनानां[1] ध्वनिमिव भवतो दुन्दुभेर्ध्वानमुच्चैः

स्पृष्ट्वा दन्तावलानां श्रुतिविसरसमुद्धूत[2]तादृक् समीरान्।

दृष्ट्वा युष्मत्प्रतापज्वलनमनुपदं तादृशं न्यस्तशस्त्राः[3]

सम्वर्त्तं सम्विदन्तः सपदि समरतः शात्रबास्ते द्रवन्ति ॥ 48 ॥

[सर्वे सानुमोदमाकर्ण्य राजानमभिसमुत्तान[4]हस्तविलोचनाः]

संयुज्यतां झटिति वैजयिकश्रिया महाराजः।

[इति निष्क्रान्ताः सर्वे।]

इतिश्री श्रीयुत् लक्ष्मणमाणिक्यदेव विरचिते

'विख्यातविजयं' नाम' नाटके

'धर्मराज-समरसमुद्यमो'[5] नाम

प्रथमोऽङ्कः॥

---

1. ०द्वातध्वा०, क।
2. ०द् धृ०, क।
3. ०स्त्र०, क, ग।
4. ०नं समु०, ख।
5. 'ग' मातृकायां नास्ति।

# द्वितीयोऽङ्कः

[ततः प्रविशतो रथारूढौ भीमसेननकुलौ]

**भीमसेनः–** वत्स! विलोक्यताम्–

क्रूरसत्त्वक्रीडाकराला[1] भीरुभयविवर्द्धिनीयमायोधनधरित्री। पुरस्तादेते च–

**अन्त्रालङ्कृतिमण्डिताभिरभितः स्वस्वप्रियाभिर्वृता**
**मस्तिष्कप्रचयाभिलिप्तवपुषः कङ्कालमालाधराः।**
**विश्वासृक्[2]परिपूर्णकुञ्जरशिरः शुष्कास्थिपात्री करा**
**हृष्यन्तः परिपूर्णयन्ति परितः पानोत्सवं कौणपाः॥ 1॥**

**नकुलः–** आर्य! इतोऽपि दक्षिणेन हस्तम्–

**मुहुर्विकटचीत्कृति-प्रकटतुण्डदन्तक्रिया**
**मटन्मटदिति स्फुटन्मनुजमुण्डपूर्णोदराः।**
**पिशाचकुलयोषितः प्रसृतवक्रया जिह्वया**
**लिहन्त्यमिततृष्णाया रुधिरपङ्किलां मेदिनीम्॥ 2॥**

[उभौ रथवेगं निरूपयित्वा किञ्चित् परिक्रामतः]

**नकुलः–** आर्य! अहन्यहनि नरतुरगदन्तावलजङ्गल-जम्बाल-जृम्भमान-तुन्दिलतया परिस्फुरति साङ्ग्रामिकीयमुर्वी।

**भीमसेनः–** वत्स! किंमुच्यते?

**येषां पयोधिपरिधिक्षितिभोगभाजा-**
**मभ्युन्नतिं नवनवां तनुते बुभुक्षा।**

---

1. ०राक्षस०, ख।
2. ०श्रा०, क, ग।

एतावती प्रधनभूः परितो नरेन्द्रा-
नास्वाद्य तानपि न यास्यति तुन्दिमानम् ॥ 3 ॥

[सकरुणाक्षेपम्] वत्स! पश्य,[1]

दुराचारदुर्योधनदुर्नयजनितविद्वेपविपबीजेनानुरूपं क्षेत्रमासाद्य दुरारोहद्रुम-[2]तामधिगतेन कीदृशानि फलानि न प्रसूयन्ते?

तथा हि-

गङ्गातनूजः प्रथमे कुरुणा-
मन्तेऽभिमन्युर्गणितैः किमन्यैः।
धिग्भागधेयान्यकृतापराधा-
स्तद्द्रोगवन्तोऽपि[3] भवन्ति सन्तः ॥ 4 ॥

नकुलः- आर्य! धिगस्तु तावदेतादृशदारुणकर्मोपभुज्यमानवसुधावासनाम्।[4]

भीमसेनः- वत्स! सम्यगभिहितम्। किन्तु द्वितीयवर्णमधिकृत्यैतद्वर्णयितुं[5] न शक्यते। पश्य, पश्य-

पदमपि महद्वीरक्षेत्रे मृतैर्गतमात्मना[6]
चिरपरिचयस्नेहोत्कर्षैर्निजेन वसुन्धरा।

---

1. पश्य 2, ग।
2. 'द्रुम' क मातृकायां नास्ति।
3. ०भाजोऽपि, ख।
4. ०भो०, ख।
5. ०त्य, क।
6. ०तै०, क।

न खलु वपुषा त्यक्ताऽमीभिर्महीवलयेश्वरैः[1]

कथमिव परित्याज्याऽस्माभिः[2] स्थितैः क्षितिवासना ॥ 5 ॥

नकुलः– [पुरतो[3] विलोक्य] आर्य! कलुषीकृतसहस्रकर-किरणोद्धूत-धूलिपटलै-रनुमीयते नेदीयः परापतितमनीकं[4] कौरवस्य।

भीमसेनः– वत्स! एवमेव[5]।

[किञ्चित्सोत्प्रासम्] समरमख[6]विधेर्विधायकानां रथचरणोच्छलितैः[7] रजोभिरूद्धर्वं च्छुरितमतितरां सुराङ्गनानामजनि वशीकरणैरिवाशुचूर्णैः।

नकुलः– [सश्लाघम्[8]] पश्यत्वार्यः–

क्रतूनामन्येषां[9] फलमुभयथा नैव शृणुमः

सतां राजन्यानामिह समरमिष्टीकृतवताम्।

यशो वा तत्तादृग् भवति विजये मृत्युमथवा-

श्रितानामानन्दं[10] प्रसभमभिमृत्युः प्रथयति ॥ 6 ॥

---

1. ०बलेश्व०, क।
2. ०ज्यो०, क।
3. 'क' मातृकायां नास्ति।
4. सैनिकं, ग।
5. ०तत्, क।
6. ०थन, ख।
7. ०लितो० क।
8. ०घ्य०, ख।
9. शत्रूणां०, ग।
10. ०ति०, ग।

[विलोक्य] अये! पताकाभिर्द[1]र्शनपथपरिप्राप्ता[2]भिर्भूयतेस्म।

**भीमसेनः–** हे वत्स! त्वं एताभिः पवनपरिचयादुद्धर्वाधः सञ्चरन्तीभिः[3] स्यन्दनकेतूनां-चीनांशुकवल्लीभिः स्वस्वस्वामि[4]भिश्चिरभुक्तं भूतलमनतिचिरं[5] भोक्ष्य[6]माणं नाकपृष्ठ[7]ञ्च तारतम्येन वि[8]विच्यत इति प्रतीमः।

अये! बलमपि क्षुधितस्य कृतान्तस्येव भीमस्य नयनगोचरतां प्राप्तम्?

वत्स! दृश्यते च[9] वृषसेनेनानुगम्यमानो मद्रपतिना सम्प्रेरितः करिकक्षा-विज्ञापितो[10] रथः पृतना प्र[11]मुखतोऽयमाधिरथेः।

**नकुलः–** आर्य[12]! बहुधाऽनुभूतोऽयं वसुसेनीयः स्यन्दनः किन्त्वन्यादृश इवाद्य प्रतिभाति।

---

1. ०श०, ख।
2. ०प्तोऽ०, क।
3. ०भिः० 'ग' मातृकायां नास्ति।
4. ०न०, क।
5. ०र०, क, ग।
6. ०क्षमानं० क
7. ०नारक०, ग।
8. ०विद्यत० क।
9. 'ख' मातृकायां नास्ति।
10. ०भि०, ग।
11. ०भि० क।
12. 'क' मातृकायामधिकः पाठः।

तथाहि—

धूलिव्रातमहोन्नतेरनुमितः क्ष्मामण्डलस्पर्शनः
पश्चात् प्रोषितकम्प[1]दीर्घविलसन्नागेन्द्रकक्षांशुकः।
जल्पाकीकृतदिग्विभागजलभृन्निर्ह्रादनेमिस्वनः
पीत्वै[2]वाम्बरमेति मद्रपतिना सम्प्रेरितः स्यन्दनः॥ 6॥

भीमसेनः— वत्स! स्वमातुलकृतिं कृतार्थयसि?

नकुलः— आर्य! कोऽयं तावदुत्कर्षो मद्राधिराजस्य?

भीमसेनः— वत्स! मा, मैवम्। यत्र कर्मण्यभियुज्यते, तत्रैव नैपुण्यं सत्पुरुषधर्मः। प्रमाणमत्र भगवान् श्रीकृष्ण एव।

नकुलः— [सैन्यावलोकनमभिनीय] आर्ये[3]ण तत्र भवता धनञ्जयेन च[4] निःशेषित-वीरप्राया वरुथिनीयं केवलमाधिरथिमाश्रित्य साम्प्रतमप्य[5]नवीरेव परिस्पन्दते।

भीमसेनः— [सावज्ञम्] वत्स! यत्कि[6]ञ्चित्कृतं भवद्भिः कृतं किञ्चिदपि नावाभ्याम्।

तथा हि—

यद्दुःशासनशोणितामृतरसैः सिक्ता रसज्ञा न मे
यत्कल्याणि! सुयोधनोरुयुगलं व्यापादि कि[7]न्तन्मया।

---

1. ०ल्प०, ख।
2. ०त्वे०, क।
3. ०र्यो०, क।
4. च 'क' मातृकायां नास्ति।
5. ०द्य०, ग।
6. यत्कृतं, ख, ग।
7. ०ञ्चि०, क।

किं वा विश्रुतवीर्यजर्जरजगज्जैत्रेण गाण्डीविना

कर्णोऽस्तीत्यधुनापि वाक्यविशिखैः कर्णौ हि नः क्लिश्यते॥ 7॥

नकुलः– आर्य! भवतो[1] क्रोधाग्नौ पूर्णाहुतये त्रयो वर्तन्ते, तदप्यनतिचिरादेव सम्पद्यते[2]।

[किञ्चित्सविस्मयमालोक्य] आर्य! कोऽयं दक्षिणपूर्वायां वलयैकभागः सुमहता रथघोषेण सर्वसैन्यानतिक्रम्याभिवर्त्तते?

भीमसेनः– [विलोक्य] वत्स! एते संसप्तका दुर्मन्त्रिणा दुर्योधनेन धनञ्जयं व्यापादयितुमादिष्टाः[3] समम[4]भिवर्तन्ते। तदवसरे कर्णो हि धर्मराजं घर्षयत्विति।

[सक्रोधम्] वत्स! आवयोर्निहितभारेण धर्मराजेन कृष्णार्जुनाभ्यां यावदायोधनभूरलंक्रियते, तावत् क्षणं भवता यावद्भिः सैनिकैरभिवृतेन संसप्तकाः प्रतिरुध्यन्ताम्। अहमेतस्य दुर्नयमूलस्याधिरथेर्म्मस्तकमस्तिष्कानुलेपनैर्भुजदण्डभ्रमितगदां विभूषयामि दूषयामि च सङ्कल्पं सुयोधनस्य। किञ्च–

अङ्गानामधिपे मयाद्य[5] समरश्लाघिन्यनङ्गीकृते

भ्रातुः कृत्यतयैव तत्कृतमतः पूर्णप्रतिज्ञो[6]ऽपि सन्।

वीभत्सुर्विमनायते यदि तदा तस्य प्रतिज्ञापि तद्

व्यत्यासेन विधारस्यते कुरुपतौ दुर्योधने पूर्णताम्॥ 8॥

---

1. ०तो:०, ख, ग।
2. ०प्र, ग।
3. ०दितु०, क, ०र०, ग।
4. 'क' मातृकायां नास्ति।
5. ०यमा०, ग।
6. ०ज्ञापि० क।

**नकुलः**— कथमेतदार्येण विधातव्यम्? यतः—

**प्रतिज्ञां स्मरतार्यस्य हिरण्यपुरवैरिणा।**

**शतस्य धार्त्तराष्ट्राणामेकोऽपि नैव सूदितः॥ 9॥**

तेनैव तत्कर्त्तव्यमनतिचिरेण निःशेषयिष्यते।

**भीमसेनः**— तावदेष पश्यतो मे समग्रसैनिकं निःशेषयतु।

**नकुलः**— कथमेतद् भविष्यति? तत्र भवन्तं धनञ्जयं[1] प्रतीक्षमाणेनात्र भवता नासीर-निष्पतद्भिः संसप्तकैः समरविहारः[2] परिपूर्यतामहमपि[3] राधेयं प्रबाधितुमाज्ञया[4] तावदनुग्राह्यो[5]।

**भीमसेनः**— [स्वगतम्] किमिव वत्सनकुलः कर्णेन प्रतियोद्धुमुत्सहते[6]?

[क्षणं विचिन्त्य] आम्, तत्सारथ्यमधिष्ठितवन्तं मातुलमभिसन्धाय[7] वत्सेनैतदध्यवसीयते। भवतु ममापि कर्णनिधनोत्कर्षाद् वत्सविजयानुरोध एव प्रथमः कल्पः। [प्रकाशम्] वत्स! किरीटिकल्पं भवन्तं विभावयामहे। यद्ययमेव ते सङ्कल्पस्तदा सर्वानीकसहायिना सावधानेन दुरात्मदुर्योधन[8]-सखोऽयं प्रतिरोध्यः। अहमपि संसप्तकान् संप्रविश्य[9] वत्सबीभत्सोर्भारातिशयं

---

1. 'क' मातृकायां नास्ति।
2. ०रं, क।
3. ०न्ता०, क।
4. बाधयि० क, प्रतिबाधि० ग।
5. ०ह्यम्, क।
6. प्रति० क, ख, मातृकायां नास्ति।
7. ०न्धी०, ख, ग।
8. ०त्मा०, ख, ग।
9. ०वीक्ष्य, ख।

किञ्चित्तुच्छीकरोमि।

नकुलः– यदभिमतमार्याय[1] इति। [निक्रान्तौ]

[ विष्कम्भकः ]

[ततः प्रविशति पार्ष्णिग्राहेण वृषसेनेनानुगम्यमानो रथारूढ़ः कर्णः शल्यश्च।]

कर्णः– अये! प्राप्तोऽस्मि पृतनाभिमुखं पञ्चालानाम्? तत्किमनेन क्षत्रिय-त्रसरेणु-तिरस्कारेण? समीहितमवगच्छामि। [सावष्टम्भमुच्चैः]

**रेपाञ्चालाः क्व पञ्चच्छलहतगुरवः पाण्डवाः पण्डु[2]शौर्याः**

**किन्नैरद्य श्रुतोऽहं भुजपरिघपराभूतभूचक्रभूपः।**

**यः सन्धेर्मागधस्य प्रविघटनपुनर्योजनो[3]द्दीप्तसारः**

**सैनापत्येऽभिषिक्तः कुरुकमलवनादित्यदुर्योधनेन॥ 10॥**

कथं पाण्डवानामेकोऽपि न दृश्यते? अरे पाञ्चालवी[4]रब्रुव! किं न श्रूयते[5]?

**क्वासौ भीमः कुरूणां शतनिधनमुधाभूतसङ्कल्पमूढः**

**क्वासौ गाण्डीवधन्वा प्रियदनुजरिपुद्वन्द्वयुद्धं विधित्सुः।**

**क्वासौ राजा यमाभ्यामभिल[6]षितमनो राज्यलक्ष्मीविलासः।**

**कर्णे युद्धाङ्गनेऽस्मिन् धृतधनुषि वनन्ते पुनः किं प्रयाताः॥ 11॥**

---

1. ०रुचि०, ख।
2. ०ण्ड०, ख, ग।
3. ०नाङ्ग्ना०, क।
4. ०लीरुद्धव, ग।
5. किमनुभूयते, क।
6. ०नमि०, क।

शल्यः– सखे कर्ण!

सम्भवोक्त्याऽपि शक्तानां न प्रशस्ता विकत्थना।
शरदीय-घन-ध्वान-वचोभिः किं भवादृशाम्?॥ 12॥

कर्णः– सखे मद्राधिप! किमुच्यते? शरदीयतोयदस्तनिततुल्यो हि कर्णस्य वाग्व्यापारो न तु प्रावृषि? तद् बहुधाप्यनुभूतोऽयं भवद्भिरधुनाप्य-नुभूयताम्–

विगतरथविहस्तन्यस्तशस्त्रप्रमत्त-
स्खलितगतिभयार्त्तान्नैव जातु[1] प्रहर्त्ता।
रण-रभस-विधिज्ञो दीप्तदोर्द्दर्पकण्डु[2]-
विषमगदचिकित्सा-सार्वभौमोऽस्मि[3] कर्णः ॥ 13॥

शल्यः– [श्लोकस्य पूर्वार्द्धं पठित्वा] सखे कर्ण!

ईदृग् जनप्रवादोऽयं पुराऽऽसीत्तव पौरुषे।
अभिमन्योर्धनुच्छेदे[4] सोऽपि पिच्छिलताङ्गतः॥ 14॥

कर्णः– [सरोषमिव] किं किं तत्र किं जातम्?

शल्यः– तदपि किं पृच्छसि? नमोऽस्तु निस्त्रपता-परमैश्वर्याय।

एको बालः सारसंख्याप्रकर्षै-
वारं वारं भग्नदर्पैर्भवद्भिः।
यत्नात् प्राणैर्मोचितः स त्वयत्ना-
च्चक्रे मुक्तान् किन्न[5] युष्मान् यशोभिः?॥ 15॥

---

1. ०या०, क।
2. ०ण्डदर्प, क।
3. ०सि०, क।
4. ०विच्छन्न० क।
5. नु, ख।

कर्णः– [सरोषम्] अरे मद्रजाल्म! कर्णस्य निर्मले यशसि जैवातृके भवद्विधानां क्षुद्राणां वचोभिः कुरङ्गः प्रतिपादयितुं[1] शक्यते? पश्य रे पश्य–

**कृष्णः समस्तजगतां जयजृम्भमाण-**

**स्तादृक् प्रभावकुशलोऽपि कपीन्द्रकेतुः।**

**तातोऽनुजातनुजमातुलनन्दनौ[2] तौ**

**मद्वन्द्वयुद्धमभिसम्भ्रमसंहतौ स्तः॥ 16॥**

शल्यः– अरे मूढ! राधाजठरजात! किमियमनात्मज्ञतया[3] दूरप्रसङ्गिनी ते वाक्-परम्परा?

कर्णः– अरे मूढ! राधा वा अन्यादृशी वा भवतु।

**या सन्नाहसमृद्धाङ्गं मामसूत सकुण्डलम्।**

**जगत्यां सैव जानीहि वीरप्रसवदीक्षिता॥ 17॥**

शल्यः– [सरोषस्मितम्]

**वर्मापि[4] सहजन्मासीच्छर्मणे जातकर्मणि।**

**मर्मच्छेदिनि[5] संग्रामे तदप्यन्तर्दधे तव॥ 18॥**

कर्णः– [सरोषाहङ्कारम्] अरे मद्रमूर्ख! वर्म्म वा चर्म्मसमाश्रित्य प्राणरक्षणे[6]

---

1. ०दितुं, ख।
2. ततोऽनुजा क, तातानुजाता०, ग।
3. ०सक्त०, क, सङ्ग, ख।
4. ०द्व० ख।
5. च०, क।
6. ०प्र०, क।

भवद्विधानामेव[1] यत्नो, न पुनस्तस्य कर्णस्य। यमन्तेवासिनं क्रिमिदंष्ट्रा-[2] विदीर्णोरुनिःसृतासृक्प्रवाहं गुरुनिद्राभङ्गयान्न किञ्चिद्विचेष्टमानमुत्सङ्ग-शायी भगवान्[3] भृगूद्वहः स्वयं प्रबुद्धः[4] सन् सस्नेहाद्भुतमालोक्य सबहुमानमित्यवादीत्–

या विख्यातिरधीत्य मे समभवद् भूभृत्कुमारीपते-
स्तत्तादृग्जगतीजयेन यदभूस्त्रिःसप्तकृत्वो जयः[5]।
या प्रीतिः पितृतर्पणे परिणता[6] राजन्यरक्तार्णवे
त्वामध्याप्य तदप्यतीत्य तनुते कश्चिद्विशेषः स्थितिम्॥ 19॥

शल्यः– [सक्रोधस्मितम्] अतस्त्वां प्रमादवन्तमर्द्धरथत्वेनाजीगणद्[7] गङ्गासूनुः[8]–

राजन्यप्रशमसमुन्नतैर्यशोभि-
र्विश्लिष्टो भृगुपतिरप्यकारि येन।
यो भीष्मः शरनिकरैर्निपातितोऽयं[9]
पार्थेन प्रथयति[10] चेतनां न तेभ्यः[11]॥ 20॥

---

1. ०नाम्, क, ग।
2. ०ष्ट्र०, ख।
3. भवान्, ख।
4. बुद्धः, क।
5. ०यशः, ख, ग।
6. ग०, ग।
7. ०मो०, क।
8. ०थि०, ख।
9. ०नृप, क।
10. ०पृ०, ग।
11. ०ऽद्य, ग।

कर्णः— [सातिशयावष्टम्भम्] अरे मद्रापसद! भगवन्तं [1]भृगुपतितिलकमप्य-धिक्षिपसि? तन्मन्ये—

**गमनीयस्य पार्थानां शस्त्रधारापथस्य मे।**
**[2]मार्जनाय पुरो गामी भवानेव भविष्यति ॥ 21 ॥**

वृषसेनः— [सहसोपगम्य] तात! किमयं चिरसखे विशेषतः [3]सारथ्यमुपगते मद्रपतौ [4]क्लीवः क्रोधावेशः?

कर्णः— [परिस्फुरदधरम्] वत्स! नाधिगम्यसे परमेश्वरं परशुराममधिक्षिपता?—

**दिथक्षौ पाण्डुदायादान् [5]कर्णक्रोधहुताशने।**
**अनेन मद्रमूढेन लभ्यते शालभीः क्रिया ॥ 22 ॥**

शल्यः— वृषसेन! [6]मुमूर्षत्कामिनीकटाक्षकवलितहृदयस्ते तातः यज्झटिति मामेव धनञ्जयति।

कर्णः— [7][निर्भरकोपाभिनिवेशम्] तथास्तु, तिष्ठ रे मद्रकीट! तिष्ठ। शस्त्रं गृहाण। [इति खड्गात् शरग्रन्थिं मोचयति।] [शल्योऽपि भद्रं भद्रमित्युक्त्वा तथा करोति।]

---

1. 'क' मातृकायां नास्ति।
2. ०ऽर्जु०, क।
3. ०पा०, ख।
4. ०व, क।
5. ०ये, क।
6. ०र्षा, ग।
7. ०क्रोधा०, ख, ग।

**वृषसेनः–** [सत्वरं स्वरथात्कर्णरथमारुह्य उभयोर्हस्तमादाय] किमिदमनार्यं[1] क्षत्रियपुङ्गवयोर्युवयोर्येनाति[2]भयजर्ज्जरिता जन्यते दुर्योधनजयलक्ष्मीः।

**शल्यः–** वृषसेन! आमूलात् सर्वमाकर्णितं भवता, किमनुचितमभिहितं मया?

**कर्णः–** ईदृशमेवोचितमध्याप्यन्ते[3] मद्रकाध्यायपकेन।

**वृषसेनः–** उचितमनुचितं वा सर्वमेतन्मर्षणीयम्, मत्प्रणयात् पितृचरणैर्मद्रराजेन च।

[इति खड्गमुष्टितः प्रमोचितहस्तौ तौ शान्त्वयित्वा पुनः स्वरथमध्यारूढः। शल्योऽपि विचित्रगतिभिः प्रीतिभिर्विविधमण्डलैः स्यन्दनं मण्डयन् पुरः[4]प्रेरयति।]

**कर्णः–** [सहर्षम् सविजयकोदण्ड[5]-दोर्दण्डमास्फालयन्]

अरे रे पाञ्चालाः! कथं भवन्तस्त्रस्यन्ति विद्रवन्ति च श्रूयन्तान्तावत्–

मधुनरकसुरद्विद् पूर्णपक्षप्रसर्पद्

विजयगिरिविभेदारम्भदम्भोलिदम्भः।

धृत[6]कुरुजयभारः[7] कर्णदोर्द्दण्ड एष

स्फुरति विजयधन्वा नैव युष्मान् प्रहर्त्तुम्॥ 23॥

---

1. ०का०, ख, ग।
2. ०हिं०, क।
3. मद्रका अध्यापकगणाः, क।
4. ०रुषः , ग।
5. ०ण्डं, ख।
6. वृ०, क।
7. ०वः, ग।

तदद्य कर्णकोपकटाक्षाय किरीटिनमुपसृत्य[1] चिराय प्राणवन्तो भवन्तु भवन्तः। [नेपथ्ये] अरे दुरहङ्कारपरिरब्ध-वृथाविकत्थन! किमनेन तवार्यधनञ्जयपर्य्येषणेन? श्रूयन्तान्तावत्–

[जेतृभ्यो:[2]] दिविषत्पतेः प्रथमतोऽप्यादाय भिक्षामसून्
ये दैन्यानधिचिक्षिपुस्त्रिजगतां जिष्णोर्यशश्लाघिनः।
त्वत्तः सम्प्रति तत्परिग्रहविधौ ते व्रीडिता मार्गणा-
स्तत्तेषां प्रतिहस्ततां परिगता मूर्च्छन्ति मच्छायकाः ॥ 24 ॥

**कर्णः**– अये! कोऽयं तावत्? आम्, आर्यतया धनञ्जयमभिदधानेन यमयोरन्यतरेण भवितव्यम्?

**वृषसेनः**– तात! शलभकेतुनाऽऽकलय्यते[3], नकुलोऽयं यावत्या सेनया समभिवर्त्तत[4] इति।

**कर्णः**– [सहासम्] साधु रे नकुल! साधु। अपसृतभीमार्जुनतपनतारापतौ सम्प्रहारगहने कर्णक्रोधान्धतमसि[5] मग्नायाः[6] पाण्डुसेनाया ज्योतिरिङ्गण[7] इव भवान् विलोचनभावुकमुद्भावयति? कर्णस्य पुरस्तादभिषेणनमपि[8], तवातिशक्तितां समर्थयते? परन्तु–

---

1. ०त्कृ०, क, ०पकृ० ग।
2. ये भृत्यो, क।
3. सर०, क।
4. मा०, क।
5. ०स०, ख।
6. ०यो०, क।
7. ०योर्ज्यो०, क।
8. ०स्ताव०, ख।

धनञ्जयपयोराशिं पिपासोश्चिरतृष्णया।
त्वया कूपेन मे तृप्तिः कीदृशी जनयिष्यते? ॥ 25 ॥

[पुनर्नेपथ्ये]

अवलेपमदान्धस्य मानान्धाश्रयिणस्तव।
कूपेऽपि पतनं नैव विचित्रं सूतनन्दन! ॥ 26 ॥

**कर्णः**— [सक्रोधम्] अरे पाण्डवद्व्यणुक! महाराजदुर्योधनमप्यधिक्षिपसि? मदमुग्ध-मतङ्गजमस्तकोद्घाटन-प्रसारित-नखरस्य मृगेन्द्रस्य पुरस्तादुत्पुच्छायमानस्य नोत्प्लवता क्षेमङ्करी कुरङ्गकिशोरस्य?

**नकुलः**— अरे सूतनन्दन! निर्णीते हि क्रियमाणे[1] तुलाधिष्ठाने स्वगुरुताप्रकाशनं लघुतामेव द्रढयति।

**कर्णः**— [सक्रोधस्मितम्] वत्सवृषसेन! व्यूहद्वारमवष्टम्भ्य क्षणं स्थीयताम्। अयमहमस्य[2] शस्त्रानलखेदेन पाण्डवशिशोरकाल-कालकलह-कण्डुलतामपनयामि।[3] [इति मद्राधिपप्रेरितरथस्थो[4] निष्क्रान्तः।]

**वृषसेनः**— सूत![5] सम्प्रति न कश्चित् पाण्डवानां व्यूहाभिमुख्यमभ्येति। तत् स्थिरतया स्थापय[6] मे रथम्। विविधप्रकारां प्रत्यक्षीकृतामपि तातस्य विक्रान्तिमहरहर्नवनवामिव चेतसि चमत्काराञ्चिन्वानामवलोकयितुमाकुलोऽस्मीति।

**सूतः**— यथाज्ञापयत्यायुष्मान् इति। [तथैवाचरति।]

---

1. ०णा०, ग।
2. अयर्मस्य, क।
3. ०र्पयामि, ख।
4. मद्रराज, ख, ग।
5. सूत्रधारः? ग।
6. ०याम, क।

**वृषसेनः–** [किञ्चित्सविस्मयम्] अये! अयमयं बहुभिः पाण्डवयोधैस्तुपारसमयै-रिवारुणेनार्कः, हिमकर[1]किरणसदृशैर्विशिखैस्तातः परिवार्यते स मद्रेशः[2]।

**सूतः–** [क्षणं निरूप्य सहर्षम्] आयुष्मन्[3]! पश्य, पश्य–

**शस्त्रज्वालागभस्तिः[4] कृतविजयधनुर्मण्डलान्तःसमुद्यन्**

**वीरव्रातप्रमुक्त[5]प्रहरणगहनध्वान्तधारामुदस्यन्।**

**नक्षत्राणामिवैषां प्रतिविशिखभृतां हेलया कर्ण-हेलिः**

**सर्वेषां सम्बिधत्ते मृधनभसि[6] तिरस्कारमाशु प्रतप्तः ॥ 27 ॥**

**वृषसेनः–** [सानन्दमवलोक्य[7]] सूत! सम्यगभिहितम्। क्षणमात्रेणैव तातशस्त्र-चयचुम्बिताः[8],–

**केचिद्भग्नरथा निकृत्तधनुषः केचिद्द्रवन्तोऽपरे[9]**

**पश्चादग्र[10]विलोकनैः समभवन्स्त्रासा[11]द्द्विरास्या इव।**

---

1. हिमकण, ग।
2. मद्रदेशः, क।
3. ०ष्मा०, क।
4. ०स्तिभि०?, ग।
5. ०यु०, क।
6. सुर०, क।
7. ०मालो०, ख, ग।
8. ०संयोगात्, ग।
9. केचित् स्रवन्तोऽभितः, क, ख।
10. ०च०, ख, ग।
11. ०सां, ख, ग।

**अन्ये दूरमतीत्य हन्त सुहृदः शोचन्त्यपि[1] स्थायिन -**

**स्ताते कार्मुकसंस्पृशि स्खलति[2] नो कस्याभ्य[3]मित्रीयता ॥ 28 ॥**

सूतः– अहो! पलायमानैः पाण्डु-पाञ्चालशस्त्रग्राहिभिः शून्ये समरक्षेत्रे साम्प्रतमेको नकुल एवात्मनः सांयुगीनतामुपयोजयति।

वृषसेनः– साधु नकुल! साधु! तातपुरस्तादाभिमुख्यमपि ते साहसिक्यम्।

सूतः– श्रूयताम्, किमुच्यते नकुलेन?

सूतः– आयुष्मन्निदमुक्तम्–

**मयाहूतो[4]ऽपि राधेय बाधसे किं पृथग्विधान्।**

**पौरुष[5]प्रभुतामद्य द्रष्टुमुत्कण्ठितोऽस्मि ते ॥ 29 ॥**

वृषसेनः– सूत! स्मयमानः किमाह मे जनयिता?

सूतः– एवमाज्ञप्तमङ्गाधिपेन–

माद्रवतीनन्दन[6]! चर्मसंस्फोटचमत्कारचतुरस्त्वमसि। अयमयस्कुशी-सम्प्रहारः, कथमत्र स्वीयसंहनन-सौन्दर्यमल्प[7]यितुमारभसे?

वृषसेनः– सूत! श्रूयन्तान्तावत्, नकुलः किमुत्तरयति?

सूतः– आयुष्मन्[8]! एतदभिहितम्–

---

1. ०भि०, क।
2. ०यति, ख।
3. ०द्य, ख।
4. आहूतोऽपि, क, ख।
5. सद्य, क।
6. 'ख' मातृकायामधिकः पाठः।
7. ०नर्प०, क।
8. एताव०, ख।

'उपालम्भशूरताप्रयोजकस्तेनायं द्यूतसमयः, इयं[1] तत् फलभोगभूरेव।'

**वृषसेनः–** सूत! समाकर्ण्यताम्।

[स्मायं स्मायं] किमाज्ञापितं तातचरणैः?

**सूतः–** एतदा[2]ज्ञप्तम् :– 'मयोपन[3]द्धस्त्वमपि दुर्मनायसे?'

**अकृतकिमसहिष्णुः पाण्डवानां द्वितीयः**

**स्मितविहितवचोभिश्चापकोट्या पिन[4]द्धः।**

**नकुलः! समभि[5]कष्टस्त्वं प्रयासि प्रकोपं**

**प्रथयति शलभानां यत्कृशानोर्न वेत्सि ॥ 30 ॥**

**वृषसेनः–** सूत! निपुणमवलोकय, किं व्यवस्यते नकुलेन?

**सूतः–** आयुष्मन्! अयन्तावत्सक्रोधः किमप्यनुक्त्वा कार्मुकं विस्फार्य शरक्षेपं सम्विधत्ते। तथा हि–

**हस्तिकक्षाध्वजे सै[6]न्ये स्यन्दने सैन्धवेषु च।**

**अङ्गेष्वप्यङ्गराजस्य राजन्ते नकु[7]लेषवः ॥ 31 ॥**

**वृषसेनः–** सूत! कथमधुनापि तातधनुषो मृदुरेव टङ्कारः श्रूयते?

---

1. इयन्तु, क।
2. एवमा, ग।
3. ०लब्ध०, ख, ग।
4. ०भिनुन्नः, क, ०पिनुन्नः ग।
5. ०तिरुष्ट० ग।
6. ०शल्ये, ग।
7. ०लै०, क।

**सूतः—** आयुष्मन्! विषयानुरूपो हि समर्थानां कोपावेशः।[1] तथापि तिरस्कृत-तरणिमण्डलोऽयं विशिखसन्दोहः प्रमुक्तस्ते जनयित्रा।

[सहर्षम्] पश्यत्वायुष्मन् क्षणेनैवायं नकुलः—

**अङ्गराज-शर-सङ्गतरङ्गै-र्यानभङ्गविकलोऽपि भुजाभ्याम्।**
**तर्त्तुमुद्भटसमित्तटिनीशं खेटकं समभिलम्ब्य समुत्सुकः॥ 32॥**

[सहसोद्ग्रीवम्] अयमहो! —

**प्रतापैः कर्णशूरस्य किञ्चिदुज्ज्वलितैरपि।[2]**
**हा धिङ् नकुलशीतांशुर्निष्प्रभः प्रपलायते॥ 33॥**

**वृषसेनः—** पलायितोऽपि?

**सूतः—** आयुष्मन्! न[3] केवलं पलायितः,[4] स्वयमङ्गपतिना[5] पश्चात् समभिद्रुत्य कार्मुककोट्या कण्ठोऽपि निगृहीतः।[6]

**वृषसेनः—** [सोत्प्रासावज्ञम्][7]

**यस्यात्मजो गुडाकेशस्तस्यापि नकुलः सुतः।**
**आकरो हि[8] नदीभर्त्ता शङ्ख-शम्बुकयोरपि॥ 34॥**

---

1. क्रोधा०, ख, ग।
2. ०च्छ०, क।
3. 'क' मातृकायां नास्ति।
4. ०त, क।
5. अ०, क।
6. सं०, ग।
7. सावज्ञम्, ग।
8. ०ऽपि, क।

**सूतः–** आयुष्मन्। एष ते तातः संगृह्य नकुलमित एवाभिवर्त्तते। तदायुष्मता त्वया जयोक्तिभिः[1] समासाद्यताम्[2]।

**वृषसेनः–** सूत! कीदृशीयं विजयसम्भावना तातस्य? तदतिचिराद् धनञ्जयजयेन सम्भावयामि तातचरणान्।

[ततः प्रविशति अपटाक्षेपेण कण्ठावसक्तकोदण्डं नकुलमादाय रथारूढः कर्णः शल्यश्च।]

**शल्यः–** अद्य कौरवनरेन्द्रवेतनम्।

कर्णः! साधुपरिशोधितं त्वया। स्यन्दनच्युतिपरिच्युतायुधस्पृष्ट एष नकुलो रणाङ्गणे।

**कर्णः–** [सस्मितम्][3] सखे भद्रभूप! भागिनेयस्ते भवतु कल्याणी।

[इति नकुलं प्रमोच्य सानुनयोपालम्भम्]

**मासीदमाद्रेय मया यदस्तं[4]**

**कोदण्डमेतत्तवकण्ठदेशे।**

**द्रुतं प्रकोपाय धनञ्जयस्य**

**किं त्वां प्रमथ्यास्तु मम प्रकर्षः॥ 35॥**

तत् सहोदराणां सकाशे स्वमन्दिरे वा यत्र कुत्रापि समभिगच्छन्नेतावता[5] वचनीयताविषयो[6] भविष्यति भवान्। यतः–

**मम विशिखविचुम्बिताङ्गयष्टि-**

**र्निमिषसि यत्तु तदेव पौरुषन्ते।**

---

1. 'ख' मातृकायां नास्ति।
2. प्रतिपद्यताम्, ख।
3. सविस्मयम्, ग।
4. ०स्त्वं, ग।
5. 'क' मातृकायां नास्ति।
6. 'क' मातृकायां नास्ति।

हरि[1]निशितनखाङ्कुरप्रमुक्तः

प्रथयति पाटवमुच्छ्वसन् कुरङ्गः ॥ 36 ॥

[इति मुक्तो नकलस्तू[2]ष्णीमधोमुखो निष्क्रान्तः।]

सूतः— आयुष्मन्! अङ्गप्रभुना प्राक् पाण्डवद्वितीयोऽपि तादृग्वशीकृत्य परित्यक्तः। साम्प्रतं नकुलोऽपि तन्महति विस्मये निमग्नाः वयं व[3]र्तामहे।

वृषसेनः— सूत! फाल्गुनम[4]न्तरेण जीवन्तोऽप्यन्ये पाण्डवाः न[5] किञ्चित्[6]करभाजः। तेषु निहतेष्वपि फलाभाव इत्यभिप्रायः पितृपादानां प्रतीयते।

[ नेपथ्ये कलकलः ] [ कर्णः सावधानमाकर्णयति।]

[पुनर्नेपथ्ये]—

सैन्ये संसप्तकानां प्रबलजलनिधौ मन्द[7]रीयत्यमर्षी

जिष्णुर्ज्येष्ठोऽपि तस्य श्रुतनकुलपराभू[8]तिरभ्येति रुष्टः।

कर्णः— अ[9]ये! नकुल-निग्रहमाकर्ण्य भीमो हि रुष्टः समायाति न सव्यशाची?

---

1. ०रि०, क।
2. नकुलाधोमुखस्तूष्णीं, ख।
3. निव०, ख, ग।
4. ०मप्य०, ग।
5. 'ख' मातृकायां नास्ति।
6. ०त्करताभाजः, क।
7. मन्दरत्यात्महर्षी, क, मन्दरीयत्यमकार्षी, ख।
8. ०रन्योऽति०, क, रभ्योऽति, ख।
9. ०रे, ग।

[पुनर्नेपथ्ये]

मत्ताः सर्वे भवन्तु क्षितिपतय[1] हतस्तत्तदाकर्ण्य[2] कर्णं
तुण्डं[3] दन्तावलेन्द्रं व्रजति हरिरिव क्रोधनो धर्मराजः ॥ 37 ॥

**कर्णः–** [साट्टहासम्] धर्मराजः कर्णं हन्तुमुपयाति। अहो! कर्कटीगर्भवद्गर्भः[4] प्रादुर्भूतोऽयं पाण्डवषण्डस्य[5]। भवतु, भवतु, समीहितमीनग्रहणाय पतङ्गहिंसापि[6] समुपयुज्यते। [उच्चै] वत्स[7]वृषसेन! इतः इतः।

**वृषसेनः–** [सहसोपसृत्य] आज्ञापयन्तु तातचरणाः।

**कर्णः–** वत्स! धनञ्जयस्तावत् मत्तोऽपसरन् संसप्तकनीरधौ निमग्नः[8], युधिष्ठिरो हि मामभ्यर्थयति।

**वृषसेनः–** [सस्मितम्] कीटभेदस्य पक्षोद्गमः स्वविनाशायैव।

**कर्णः–** वत्स! सावधानेन पृष्ठरक्षिणा भवितव्यम्। संसप्तकान् सन्द्राव्य कदाचित् कृष्णार्जुनौ वा परापततः, क्षणन्तावन्नकुलस्येव युधिष्ठिरस्यापि मुखमवलोकयामीति।

[विप्रकटितं परिक्रम्य] भो भो दुर्योधनपक्षपातिनः पार्थिवाः! अद्यप्रभृति

---

1. इ०, ग।
2. कर्ण:, क।
3. संहर्तुं, ग।
4. गर्व०, क।
5. पाण्डवस्य, क।
6. हिंसामुप०, क।
7. 'क' मातृकायां नास्ति।
8. 'नि' कमातृकायां नास्ति।

निरुपद्रवा भवन्तु भवन्तः। तथा हि–

नाहं पाञ्चालपाण्डुप्रभवनृपवधू-भ्रूणहत्याभयार्त्तः[1]

प्रामुञ्चं यत्प्रसह्यं त्रिभुवनभयकृत्साम्प्रतं प्रीतये वः।

निःशेषं सम्विधत्तां तदहितमचिराद्भार्गवास्त्रं मयाप्तं[2]

राजा दुर्योधनोऽद्य स्वपितु चिरसुखं क्षिप्तहृत्तापशङ्कुः ॥ 38॥

[इति निष्क्रान्ताः सर्वे]

इतिश्री श्रीयुत् लक्ष्मणमाणिक्यदेवविरचिते

'विख्यातविजयं' नाम नाटके

'नकुल-निग्रहो' नाम

द्वितीयोऽङ्कः ॥

---

1. ०र्ताः, ग।
2. ०स्तं ग।

## तृतीयोऽङ्कः

[ ततः प्रविशतो रथारूढौ श्रीकृष्ण-धनञ्जयौ। ]

श्रीकृष्णः— सखे सव्यशाचिन्[1]। समस्तशस्त्रभृतामतिशयितस्तवायं पौरुषोत्कर्षः। यतो मत्सदृशैर्दशभिः सहस्रैः शस्त्रधारिणामन्यैरपि संहताः संसप्तका एकेनैव भवता निगृहीताः।

किञ्च—

शौटीर्यन्ते भुजपरिघयो भूर्भुवः स्वर्विचित्रं
तादृक् संसप्तक[2]-सलिलधिर्[3]यत्प्रतापैरशुष्यत्।
अन्यच्चित्रं यदिह पतितैर्वीरचक्रोत्तमाङ्गै-
र्मौर्वी मुक्ताः पुनरनुमिताःशस्त्रसंघा[4] भवन्ति॥ 1॥

अपि च—

अद्यामर्त्यपतिः सहस्रनयनीं विभ्रद्विशिष्टोऽन्यत-
स्त्वत्तादृग् विजयं विलोक्य विगलद्धर्षा[5]श्रुधारोत्करैः।
वैचित्र्यं तनुते सनालसरसी जन्मावृतिः[6] श्रीयुत-
स्सर्वे स्वर्गसदः सदात्मजतया तं वर्द्धयन्तेतराम्॥ 2॥

---

1. ०सा०, ख।
2. ०कानां, ख।
3. ०निधि०, ख।
4. ०संख्या०, क।
5. ०द्व०, ग।
6. ०ति०, ख।

धनञ्जय :— भगवन्!

केनाभिनयनैपुण्यं नृत्यन्ती सूत्रयोगतः।
नर्त्तयन्तं परित्यज्य दारुपुत्री प्रशस्यते॥ 3॥

किन्तु चिराय व्यापादितोऽहं संसप्तकैर्धर्मराजविलोकनोत्कलिकया व्याकुलितोऽस्मि। तत्तद्दिशि निदेशय स्यन्दनम्।

श्रीकृष्ण:— [रथवेगं निरूपयन् सविमर्षम्।] सखे! पश्य, पश्य-विकटकपिचीत्कार-चमत्कार[1]-चटुलकौरवकरटिघटाविघट्टित[2]स्वबलभट-स्यन्दनवृन्ददन्तुरायां वसुन्धरायां प्रयत्नेनैव सैन्धवैः समाकृष्यन्ते[3] रथाङ्गानि।

धनञ्जयः— [पुरतोऽवलोक्य[4]] भगवन्! पश्य, पश्य—आस्माकीनसैनिकमध्यपरापतितः कुञ्जरकक्षाकेतुस्तत[5] इतः प्रधावन्निव दृश्यते। तत्पश्चान्मयूर-ध्वजेनानुमितोऽयं वृषसेनः सेनया सह पृष्ठं पालयन्नित[6] एवाभिवर्त्तते।

अहो! किमिदमस्मदीयानामेकोऽपि केतुर्नाभिमुख्येन दृश्यते? धर्मराजस्य ध्वजोऽपि नावलोक्यते?

श्रीकृष्णः— [समुन्नतग्रीवं निपुणं निरीक्ष्य अङ्गुल्या दर्शयन्] केशरिकेतुनाऽऽकलय्यते भीमोऽयमभिवर्त्तत इति।

धनञ्जयः— तदन्तिकमेव गत्वा तत्रत्य[7]वृत्तान्तमवधारयावः।

[इत्युभौ रथवेगेन परिक्रामतः]

---

1. 'क' मातृकायां नास्ति।
2. ०टि०, क।
3. ०ह०, क।
4. ०वि०, ख।
5. हता हतः, ख।
6. ०न्नभि०, क।
7. अत्र०, क, अत्रवृ० ग।

[ततः प्रविशति विशोकाधिष्ठितरथस्थो भीमसेनः]

**भीमसेनः—** [सखेदम्] किं वाच्यं भवनीयमुद्भटभुजा शौटीर्यसम्भाविते[1]

जिष्णौ जीवति जृम्भितायतगदे भीमे भुजश्लाधिनि।

भ्राता[2] धर्मधुरन्धरः कुरुकुलक्षीरोदशीतद्युति-

स्सोऽयं सूतकुलाधमप्रहरणैर्मर्म्मव्यथाविह्वलः[3] ॥ 4 ॥

अये विशोक! अद्य[4] किमिदमुपपन्नम्?

**विशोकः—** आयुष्मन्! न तावदियं कैशोरक्रीडा[5], रथातिरथानामभिसम्पातोऽयम्[6]। सर्वे शस्त्रभृतो विजयायैव यतन्ते, न भङ्गाय मरणाय वा। दैववशात् क्षणगुणेनापि कस्यचित्कुत्रचित्केनचित्[7]फलेनाविर्भूयते।

**भीमसेनः—** सम्यगभिहितम्।

[पुरतोऽवलोक्य][8] कथमियमभिद्रुतेव दृश्यते दौर्योधनीय[9]ध्वजिनी?

**विशोकः—** [दृष्टवा सहर्षम्] आयुष्मन्! अवलोक्यताम्—

प्लवङ्ग[10]राजविराजितोऽयं केतुः। तत्[11] श्रीकृष्ण-धनञ्जयौ संसप्तकान्

---

1. सौ०, क।
2. त्राता, क।
3. ०मः, ग।
4. 'क' मातृकायां नास्ति।
5. कि०, ख, ग।
6. ०ति०, क।
7. 'ग' मातृकायां नास्ति।
8. वि०, ख।
9. ०नी ध्व०, ग।
10. ०ग०, ख, ग।
11. 'ग' मातृकायां नास्ति।

संकलय्य भवन्तं सभाजयितुमित[1] एवाभिवर्त्तत इति प्रतीमः।

**भीमसेनः—** भवानपि तदुपकण्ठं रथं प्रापयतु। [इति रथवेगेन परिक्रामति।]

**धनञ्जयः—** [सन्निहितवर्तिनं भीममवलोक्य श्रीकृष्णं प्रति]

भगवन्! किमिदमदृष्टपूर्वमार्यभीमसेनस्य मुखमालिन्यमवलोकयामि?[2]

**श्रीकृष्णः—** सखे! निर्भरसमरपरिश्रमान्मध्याह्नमिहिर-मरीचि[3]-परिचयादपि क्लेशातिशयः प्रतीयते। भगवानपि किरणमाली दिवसमध्यमधिरूढ़ः सन्तपति समस्तान्समन्ततः[4]।

पश्य, पश्य—

क्लिश्यन्तो मदकुञ्जरावमथुभिः सिञ्चन्त्यजस्त्रं वपु-
विंस्त्रस्तानि परस्परं श्रमजलान्यास्वादयन्ते हयाः।
किम्वान्यत्किरणेन वासरमणेश्छाया समन्तादहो!
अस्पृष्टा अपि तत्प्रतप्तिविभवै[5]रुच्छन्नतामाश्रिताः ॥ 5 ॥

[ततो रथं भीमस्य रथान्तिकं स्थापयति]

**धनञ्जयः—** आर्य! महाराजस्तावत् कुत्र समभिवर्त्तते[6]?

**भीमसेनः—** वत्स! किं पृच्छसि?

---

1. सम्भाव०, ख. ग।
2. ०धार०, ख, ग।
3. 'क' मातृकायां नास्ति।
4. 'क' मातृकायां नास्ति।
5. ०तरै०, क।
6. समभि० 'ग' मातृकायां नास्ति।

धनञ्जयः— [सखेदमिव][1] महाराजस्य वृत्तान्तं पृच्छामि।

भीमसेनः— किं ब्रवीषि[2]?

धनञ्जयः— यदार्येण ज्ञायते।

भीमसेनः— ज्ञानंञ्चेत्समभिवर्त्तते?

धनञ्जयः— [सविस्मयस्[3]तूष्णीमधो[4]मुखः स्थितः]

श्रीकृष्णः— सखे भीमसेन! किमिदमस्फुटतयाभिलप्य विजयं व्यामोहयसि, माञ्च।

भीमसेनः— [दीर्घं नि:श्वस्य][5] स्फुटमभिधानमवधत्तामायुष्मन्तौ—

राधेयप्रहरणपीडितः प्रयत्ना-
द्धर्मात्मा स्वशिविरमुच्छ्वसन्प्रयातः।
पूर्वेषां यदि सुकृतैर्महत्तराणां
निर्विघ्नं निवसति नः क्षितीश्वरोऽद्य॥ 6॥

धनञ्जयः— [सखेदामर्षम्] आर्य! संहत्यापि धर्म[6]राजतः सर्वैर्महारथैः किमाधिरथि-र्वा[7]रयितुं न शक्यते?

भीमसेनः— वत्स सव्य[8]शाचिन्! कर्त्तव्ये पुरुषकारे काल-देश-दै[9]वानामपि सहकारिता

---

1. सखेदम्, क।
2. ०मि, ख, ग।
3. ०यं तूष्णीं, ग।
4. 'क' मातृकायां नास्ति।
5. 'ख' मातृकायां नास्ति।
6. महा०, क।
7. ना, ग।
8. ०सा०, ख।
9. ०दे०, ख।

विभर्त्युपयोगिताम्[1]। पश्य, पश्य—

यस्त्वं मत्स्यपुरे[2] पुरोत्तरसुकृत्सर्वान्कुरूनुच्छ्रिता-
न्निर्जित्य क्षणमात्रतः समभवः शीर्षांशुकग्राहकः।
एतावद्भिरहोभिरच्युतसखः[3] किम्वा कृथाः सोऽर्जुनः
किम्वाहं[4] कृतवान् सदोद्यमकरः कुर्वन्तु किञ्चापरे॥ 7॥

श्रीकृष्णः— [सखेदम्][5] सखे वृकोदर! किं किम्[6]। किमुच्यते भवद्भिः? किञ्चिदपि न कृतम्? तन्मन्ये—

द्रोणापगेय[7]जलसन्ध[8]किरातराज-
भूरिश्रवः[9] कुलसुदक्षिणसोमदत्ताः।
दुर्योधनावरजवृन्दजयद्रथाद्या-
स्सर्वे स्वयं समरसीम्नि सुखप्रसुप्ताः॥ 8॥

भीमसेनः— [सावज्ञम्] भगवन्[10]! अन्यै[11]र्यथा तथा क्रियताम्, न किञ्चिदावाभ्याम्।

---

1. 'ख'-'ग' मातृकयोर्नास्ति।
2. ०ह०, ख।
3. किं मा, ख।
4. किं मुग्धं, ख. ग।
5. 'क' मातृकायां नास्ति।
6. 'ख' मातृकायां नास्ति।
7. ०ह०, ख।
8. ०न्ध्य०, ख।
9. ०मल०, ख, शल, ग।
10. 'क' 'ग' मातृकयोर्नास्ति।
11. ०स्मै०, ख।

तथा हि—

'यद्दुःशासनशोणितामृतरसैरित्यादि पुनः पठति।

**श्रीकृष्णः—** एकादशानामक्षौहिणीनामवशिष्टानामत्र[1] प्रायस्त्रयो[2] वर्त्तन्ते, तेष्वपि कर्णः [इत्यर्धोक्ते] सखे सव्यशाचिन्! त्वर्यतामद्यैव—

पतिं क्लेशयतः पृथ्वी पतिव्रतपरायणा।
पीत्वा रुधिरमेतस्य प्रयातु कृतकृत्यताम्॥ 9॥

**धनञ्जयः—** भगवन्! अधुनैव ममास्त्रं ग्राहयितुं[3] यतसे? सत्यं ब्रवीमि—

आत्मानं विनिहन्मि-राजनि तथाभूते मम भ्रातरि
प्राप्तुं[4] तत्सविधं विपक्षविजये धिङ्मेऽभविष्यत्स्पृहाम्।
तस्मिञ्जीवति तन्निराकृतिकृतः पृथ्वीश्वरद्रोहिण-
श्छित्वा मस्तकमाधिनोमि रुधिरैः पृथ्वीं कृतार्थीं भवन्॥ 10॥

**श्रीकृष्णः—** शान्तम्, शान्तम्। सखे सव्यशाचिन्। तादृशस्य धर्मधुरीणस्य स्वप्ने[5]ऽपि नानिष्टमाशङ्कनीयम्।

**भीमसेनः—** वत्स! शल्यो[6]ऽद्यापि तस्य दुरात्मनो वाक्शल्यैरेवातिपीडितोऽस्मत्पार्थिवः, सर्वे भवन्तो भावुकवन्तः सन्तु। विपिनमेवाहं गच्छामीत्यस्माना[7]क्षिप्य

---

1. ०नी०, ग।
2. नां मात्र, ग।
3. ०हितुं, क।
4. ०प्तं, क।
5. ०ल्यो, क, ०ल्पे०, ख।
6. सैन्येभ्यो०, ख, शल्येभ्यो०, ग।
7. नधि०, ग।

शिविरमुपगतो भिषग्भिर्विशल्यः क्रियत इति तदनुयाताभ्यां[1] पुनरागताभ्यां[2] यमाभ्यामभिहितम्। तत्साम्प्रतं सूतसू:ुसंस्पृष्टस्य सर्वसैनिकसंहरण-समुद्यतस्य भार्गवास्त्रस्य प्रति शस्त्रं सम्विधीयताम्।

**धनञ्जयः—** आर्य! तं धर्मधुरन्धरं कुरुकुलकमलभास्करं कुशलिनं[3] दृष्ट्वैव शस्त्रस्य ग्रहणे संहरणे[4] वा प्रभवितास्मि। सम्प्रति हि मम—

**अन्तर्वाष्पतिरस्कृता स्पृशति नो दृष्टिः पुरस्तादपि[5]**
**स्वेदस्नायिशयस्तनोति धनुषो ज्याकर्षणे[6] मूर्खताम्।**
**जिह्वा जाड्यमुपास्य जर्जरयते शस्त्रीयसन्द्रावर्णी[7]**
**धिग्दैवं शतधा विभज्यत इव स्वान्तेन सन्तापिना॥ 11॥**

तत् क्षणं सङ्गरधुरमङ्गीकुरुतामार्यः। द्रुतमहं महाराजमवलोक्य[8] प्रत्या-गच्छामि।

**भीमसेनः—** यथाभिरोचते वत्साय।

**श्रीकृष्णः—** सखे श्वेताश्व! यद्ययमेव ते सङ्कल्पस्तदा किं प्रयोजनं विलम्बेन?

[इति सरथौ भीमार्जुनौ निष्क्राक्षौ।]

---

1. ०जा०, क।
2. 'क' ग मातृकयोर्नास्ति।
3. 'ग' मातृकयोर्नास्ति।
4. 'क' मातृकायां नास्ति।
5. ०स्थानपि, क, ग।
6. ०ऽद्या०, क।
7. ०मन्त्रावलीं, ख, ग।
8. ०जं वि०, ख, ग।

[**विष्कम्भकः**] [ततः प्रविशति कञ्चुकी]

**कञ्चुकी—** [किञ्चिद्गतिस्खलनमभिनीय सापराधमिव]

अहो! देवीं द्रुपदराजनन्दिनीं द्रुतं द्रष्टुमुत्कण्ठितोऽस्मि इत्यभिधाय प्रेषितोऽस्मि महाराजेन। तद् गमनवैधुर्यवार्द्धकेन वार्द्धकवैभवेन चिरस्य विलम्बितोऽस्मि। तथा हि—

**एकान्तमस्थिरतया गमनप्रसक्तिः[1]**
**पर्यापतत्तिमिरसम्परिपीतदृष्टिः।**
**वर्षेव धिक् शिथिलविग्रहसम्प्रवृत्तिः**
**प्रायो भवेत् प्रवयसो वयसः स्वभावः॥ 12॥**

[उर्ध्वमवलोक्य] अये[2]! अतिक्रान्तदिवसमध्योऽयं भगवानम्बरमणिः।

[अधस्तादवलोक्य साधिक्षेपमिव[3]]

**भानौ समुन्नतपदात्स्खलितेऽपि किञ्चि-**
**दुत्क्षिप्य[4] तत्करमितः क्रमशः समन्तात्।**
**च्छाया-छलेन तिमिरं स्वपदन्तनोति[5]**
**प्रायः प्रभोर्विपदि हृष्यति दुष्क्रियो[6] हि॥ 13॥**

तद्यथाशक्ति त्वरयाभिगम्य देवीं महाराजसविधं प्रापयामि।

[आकाशे] किमुच्यते? देव्यपि महाराजस्य शिविरागमनमाकर्ण्य[7]

---

1. ०श०, क।
2. 'क' 'ग' मातृकयोः नास्ति।
3. सापेक्ष०,क।
4. ०त्कु०, ग।
5. स्वपदन्तशोभि, क, सपदन्तनोति, ख
6. ०स्करोऽपि, ख.
7. ०र०, क।

समुद्विग्नमना वृत्तान्तमधिगन्तुमन्तःपुरद्वारमधितिष्ठतीति।

[सहर्षम्] भवतु मद्गमनपरिश्रमोऽपि किञ्चिल्लघीयान् सम्वृत्तः। तदन्तः-पुरद्वारमपि[1] नेदीयो[2] दृश्यते। [किञ्चित्परिक्रम्य नेपथ्याभिमुखमवलोक्य च]

अये! सैव—

कालोरगीं कौरवसन्ततीनां

वेणीन्दधाना प्रतिकर्म्महीनाम्।

पातिव्रतज्योतिरलङ्कृतेयं[3]

पाञ्चालपृथ्वीप्रतिभूः प्रयाति॥ 14॥

[सबहुमानम्]

एकैकस्यैव वर्त्तन्ते प्राणाः पञ्चशरीरिणः।

इयमुच्छ्वसितं कृष्णा पञ्चानां पाण्डुजन्मनाम्॥ 15॥

तदुपसर्पामि[4]। [इत्येकान्ते स्थितः[5]]

[ततः प्रविशति मञ्जुभाषिण्या परिचारिकयानुगम्यमाना द्रौपदी]

द्रौपदी— हञ्जे मञ्जुभाषिणि! महाराअस्स शिविरागमण अंकस्स मुहादो आअण्णिदं[6] तए?

छाया—[हला मञ्जुभाषिणि! महाराजस्य शिविरागमनं कस्य मुखादाकर्णितं त्वया?]

---

1. 'ख' ग मातृकयोर्नास्ति।
2. वर्त्तते, ख, ग।
3. ०द्यो०, क।
4. 'क' मातृकायां नास्ति।
5. 'क' मातृकायां नास्ति।
6. ०स्मि०, ग।

मञ्जुभाषिणि— भट्टिणि! दुवारणिउत्ताए कणअवेत्तिआए अभिहिदम्।

छाया—[भर्तृदारिके! द्वारनियुक्तया कनकवेत्रिकया अभिहितम्।]

द्रौपदी— तत्थ णिमित्तअं तए किम्पि जाणीअदि?

छाया—[तत्र निमित्तं त्वया किमपि ज्ञायते?]

मञ्जुभाषिणी— मए पुच्छिदए तए दीहदरं णिसमीअ एत्थ किं तुज्ञु णिमित्तअं आणुसञ्जाणेण? मएवि[1] किम्पि जाणीअदित्ति भणिए अत्तणिउद्वाणं अहिट्ठिदम्।

छाया—[मया पृच्छितया दीर्घतरं निःश्वस्य अत्र किं तव निमित्तं अनुसन्धानेन? मयापि किमपि न ज्ञायते इति भणित्वा आत्मनियुक्तमभिस्थितम्।]

द्रौपदी— [सविमर्षम्] ता[2] ण क्खु लहुणा णिमित्तएण होदव्वम्। जेण असमएवि सिविरअं प्पवेसिदो महाराओ।

छाया—[तत्र[3] न खलु लघुना निमित्तेन भवितव्यम्। येन असमयेऽपि शिविरं प्रविष्टो महाराजः।]

कञ्चुकी— [उपसृत्य] स्वस्ति समस्तमहीमण्डलमहाराजमहादेव्यै।

द्रौपदी— [दृष्ट्वा किञ्चित् सहर्षम्] अए! अज्जपिअम्बदो[4] अअम्। ता भोदु सव्वं ज्जेव इमादो ज्जाणिस्सम्। [प्रियम्बदं प्रति] अज्ज! प्पणमामि[5]।

छाया—[अये! आर्यप्रियम्बदोऽयम्। तद्भवतु सर्वमेवास्मत् ज्ञातव्यम्।

---

1. मए ण किम्पि, ग।
2. 'ख' मातृकायामधिकः पाठः।
3. ०तत्, क, ग।
4. ०मु०, ग।
5. प०, ग।

[प्रियम्बदं प्रति] आर्य! प्रणमामि।

**प्रियम्बदः—** झटिति निःसपत्नायाः सर्वंसहायाः सापत्न्यमवाप्नुहि।

**द्रौपदी—** अज्ज पिअम्बद! अज्जवुत्तस्स[1] वुत्तान्तं जाणिदुं अब्भत्थये।

छाया—[आर्य प्रियम्बद! आर्यपुत्रस्य वृत्तान्तं ज्ञातुमभ्यर्थये[2]।]

**प्रियम्बदः—** देवि! देवेनैव भवत्याः सविधं सम्प्रेषितोऽयं वटुकः[3]।

**द्रौपदी—** [सवितर्कम्] अज्ज! किम्पि आणत्तअम्[4]?

छाया—[आर्य! किमपि आज्ञप्तम्?]

**प्रियम्बदः—** देवीं द्रुपदराजदुहितारं[5] द्रष्टुमिच्छामीति।

**द्रौपदी—** अज्ज! कुत्थ दावट्ठदि महाराओ?

छाया—[आर्य! कुत्र तावद् वर्त्तते महाराजः?]

**प्रियम्बदः—** सम्प्रति क्रोधागारे।

**द्रौपदी—** [सवितर्कम्] अज्ज! किम्पि पओअणम्, जई जाणीयसि सुणिदुं वा जई जुत्तं ता भणादु।

छाया—[आर्य! किमपि प्रयोजनम्? यदि जानासि श्रोतुं वा यदि युक्तं तद् भणतु।]

**प्रियम्बदः—** देवि! देवयजनवेदिसम्भवे!—

---

1. ०उ०, ख, ग।
2. ०यामि, ख।
3. कञ्चुकः, ख।
4. ०उअम्, ख, ०त्तम् ग।
5. ०त०, ख, ग।

देवानामपि दुर्ज्ञेयं राज्ञामन्तःसमीहितम्।
विधेरपि[1] विधानेन स्फुटीभवति नान्यथा॥ 16॥

**द्रौपदी—** अज्ज! ता ईमिणाज्जेव पाएण आअच्छामि।

छाया—[आर्य! तदनेनैव पादेनागच्छामि।]

**कञ्चुकी—** देवि![2] समुत्सारितजनाः पन्थानः सन्ति, किं विलम्बेन?

[इति सर्वे परिक्रामन्ति।]

**द्रौपदी—** अज्ज! महाराअस्स समीवे कोऽवि वडदि?

छाया—[आर्य! महाराजस्य समीपे कोऽपि वर्त्तते?]

**कञ्चुकी—** देवि! शल्यसमुत्सारिणं भिषजमेव परित्यज्या[3]हमायातः। सोऽपि देव्यां सन्निहितवर्त्तिन्यां बहिर्भवष्यिति।

**द्रौपदी—** [अपवार्य] हञ्जे मञ्जुभाषिणि! ईमिणा वअणेण प्पहरणपीडिदो महाराओ तक्कीअदि। ता णिर्मञ्चणोपउत्तां सामग्गीं गेह्निअ लहु आअच्छेहि।

छाया—[हला मञ्जुभाषिणि! अनेन वचनेन प्रहरणपीडितो महाराजस्तर्कयति[4]। तस्मान्निर्मञ्चनोपयुक्तां सामग्रीं गृहीत्वा शीघ्रं आगच्छतु।]

**मञ्जुभाषिणी—** [निष्क्रम्य तथा कृत्वा पुनः प्रविशति]

**कञ्चुकी—** पुरस्तादिदं क्रोधागारम्। तदहं प्राक् प्रविश्य देव्यागमनेन महाराजं प्रमाणीकरोमि।

**द्रौपदी—** तधा भोदु। छाया—[तथा भवतु।]

---

1. ०रिव, ख, ग।
2. 'ख' मातृकायां नास्ति।
3. ०त्या०, क।
4. स्तर्क्यते, ख।

[ततः कञ्चुकी निष्क्रान्तः।]

**द्रौपदी—** हज्जे मञ्जुभाषिणि! कट्टुदो[1] ज्जेव[2] क्खत्तिअ कण्णाणां सम्भवो जदो एतासां जणअसोअर पईपुत्तादीणां अणवरदं प्पाणकन्दुएहिं ज्जेव खेलणअम्।

छाया—[हला मञ्जुभाषिणि! कष्टद एव क्षत्रियकन्यानां सम्भवो यतः एतासां जनक-सोदर-पतिपुत्रादीनां अनवरतप्राणकन्दुकै एव खेलनम्।]

**मञ्जुभाषिणी—** भट्टिणि! अणधा ता कधं तारिसं महाराअमहिषीमहिमाणअं अलङ्करिस्सन्ति।

छाया—[भर्तृदारिके! अन्यथा कथं तादृशं महाराजमहिषी-महिमानमलङ्करिष्यन्ति।]

[ततः प्रविशति विधूम[3]धूमयोनिज्वलन्तीं हसन्तीमुपकण्ठे[4] निधाप्य बृहदुपधानोपलम्बी[5] बद्धश्रवणो[6]ष्णीषधारी . अन्तःस्थूलपटावगुण्ठितः[7] शयनी-यस्थो धर्मराजः पुरस्तात् सविनयलगुडपाणिः कञ्चुकी च।]

**राजा—** [किञ्चिदधोमुखः साधिक्षेपम्]

**भिक्षाशनं भवतु वन्यफलाशनं वा**

**वासो द्रुमत्वगजिनं हरिणाङ्गजं वा।**

---

1. ०ट्टु०, क, ०ड० ग।
2. ०ज्जै० ग।
3. विधूमः=वि अभावो धूमो विधूसश्चासौ धूमयोनिश्चेति, ख।
4. उपकण्ठः=उपकण्ठः समीपे स्यात्, ख।
5. उपधानन्तूपवर्हः शय्यायां शययीनयवदित्यमरः, ख।
6. उष्णीषो=शीर्षवेष्टनम्, ख।
7. लम्बितः, ख।

**तल्पं तृणैरुपचिता क्षितिरद्रिणा[1] वा**

**धिग्भिन्नपौरुषकृतां श्रियमीहमानाम्॥ 17॥**

[किञ्चन्मुखमुन्नमय्य कञ्चुकिनं दृष्ट्वा] आर्य प्रियम्बद!

आगता मे प्रिया पाञ्चाली?

**कञ्चुकी—** समागतैव, भवनद्वारि द्रुपदराजनन्दिनी।

**राजा—** तत्किं विलम्बेन?

**कञ्चुकी—** [किञ्चित् परिक्रम्य द्रौपदीसमीपं गत्वा] देवि! निष्क्रान्तनिखिलपरिजनं भवनमुपपन्नम्। तन्महाराजं द्रष्टुमर्हति भवती। [द्रौपदी नाट्येन प्रविशति]

**राजा—** [दृष्ट्वा सप्रमोदम्]

**आयान्ती याज्ञसेनीयमौपकर्णिकलोचना[2]।**

**ईषदालोकनेनैव मामकार्षीदपज्वरम्॥ 18॥**

**द्रौपदी—** [राजानं दृष्टवा प्रणम्य] जअदु जअदु महाराओ।

छाया—[जयतु जयतु महाराजः।]

[इत्युक्त्वा चेटीहस्तात्सामग्रीमादाय निर्मञ्चनमाचरति।]

**राजा—** [साभिनिवेशम्] प्रिये!

**त्वदालोकनतः[3] कृत्स्नं[4] भ्रष्टमौत्पत्तिकं[5] मनः।**

**निर्मञ्चनमिदं देवि! किमन्यदपनेष्यते? ॥ 19॥**

---

1. ०क्षि०, ग।
2. औपकर्णिकलोचनेति—कर्णस्य समीपमुपकर्णिकं तस्मिन् भवं लोचनं यस्याः सा, ख।
3. त०, ख।
4. ०च्छ्रं, ख।
5. ०त्पाति०, ख, ग।

तदिहोपविश्यताम्।

द्रौपदी— [निर्मञ्चनं विधाय तत्र शयनीयोपान्ते सविनयमुपविशति।]

राजा— [कञ्चुकिनं प्रति] आर्य प्रियम्बद! द्वारभूमौ तिष्ठतु भवान्। यदा कदाचिदभिनववृत्तान्तेन केनचित् सम्भावितो भवति, तदा मां प्रमाणीकरिष्यति।

कञ्चुकी— यदाज्ञापयति देवः। [इति निष्क्रान्तः।]

राजा— देवि[1]! देवयजनवेदिसम्भवे! स्मरसि यद्विपिने भवत्या वृकोदरेण च समयमनवाप्यैव कौरवान् क्लेशयितुमहं यदुपयाचितः?

द्रौपदी— कधं ण? छाया—[कथं न?]

राजा— [2]अधुना समयेऽपि सम्भूय सर्वैः किं क्रियते?

द्रौपदी— महाराअ[3]! तारिस अपचारपउत्तेहिं दुरातुणेहिं जारिसं व्ववसिदं तेसां बधादो अण्णो तस्स को प्पदीआरो?

छाया—[महाराज! तादृशापचारे प्रवृत्तैर्दुरात्मभिर्यादृशं व्यवसितं, तेषां बधादन्यस्तस्य कः प्रतीकारः?

राजा— प्रिये[4]! न केवलं त एव बध्यन्ते, अस्मदीया अपि शेषाः कतिपये सन्ति तेष्वपि—

**कर्णे दुर्योधने शल्ये द्रोणपुत्रे च जीवति।**
**जीवत्स्वपि न जानामि कस्य कीदृग् भवेदिति॥ 20॥**

---

1. प्रिये, क।
2. 'क' मातृकायां नास्ति।
3. ०ओ, ख।
4. 'ख' मातृकायामधिकः पाठः।

सर्वेषां परिपश्यतां महारथानां पुरस्तान्[1]ममैव युध्यमानस्य[2] कर्णैकान्तिकमनुष्ठितमासीत्।

**द्रौपदी—** महाराअ! सव्वेहिं महारधेहिं कोदुहलात्थं ज्जेव सम्पराअ क्खेत्तं अहिचिट्ठन्ति।

छाया—[महाराज! सर्वैः महारथैः कौतूहलार्थमेव समरक्षेत्रमधितिष्ठन्ति।]

**राजा—** [सोत्प्रासम्] देवि!

**सर्वे मन्दिरमध्यस्थाः धनुर्वेदविपश्चितः।**
**अयोविकृति[3]सन्तापसहिष्णुः क्वापि कश्चन॥ 21॥**

**द्रौपदी—** भीमाज्जुणो वा तध्य कोवि ण आसीद्?

छाया—[भीमार्जुनो वा तत्र कोऽपि नासीत्]

**राजा-** यत्किंचिद् व्यावृत्तं भीमेनैव, फाल्गुनस्तावदुपेक्षक इव लक्ष्यते। अन्यथा येन क्षणमात्रेणैव मत्स्यनगरे कौरवान् विजित्य[4] निरंशुकशीर्षान् सम्विदधे, तेन किं विनिहताभिमन्यु[5]—घटोत्कचप्रभृतेः कर्णस्य प्रतीकाराय न प्रभूयते[6]?

[प्रविश्य सत्वरः] **कञ्चुकी**-[द्वारि स्थित्वा किञ्चिदुच्चस्वरम्[7]]

देव! रणरुधिरविचित्राभरणभ्राजमानौ श्रीकृष्ण-धनञ्जयौ[8] द्वारमध्यासाते।

---

1. अग्रे, क।
2. 'ख' मातृकायां नास्ति।
3. अयोऽहति, ख।
4. परि०, ग।
5. ०न्युम०, ग।
6. भूयते, ख, ग।
7. ०च्चैः, क।
8. किरीटिनौ, ख, ग।

राजा- [सहर्षातिरेकमुपधानं परित्यज्य] हतो हतः, स दुरामा दुर्योधनसखो निहत[1] एव। अन्यथा कथं समरमपहाय माधवमध्यमपाण्डवौ मण्डयतो मे[2] द्वारमण्डपम्?

आर्य प्रियम्वद! किं कालविप्रकर्षेण? द्रुतं प्रवेशय प्रियतरौ मे तावेव कुल-कमलसहस्रकिरणौ[3] समादिश्यन्ताञ्च परिजनाः महोत्सवाय। विजयवृत्तान्त श्रवणानन्तरं स्वयमेव बहिर्निष्क्रम्य तमाविष्करिष्यामि।

कञ्चुकी- यथाज्ञापयति देवः। [ इति निष्क्रान्तः ]

राजा- [सहर्षगद्गदस्वरम्][4]

**निष्कर्णाद्य कृता क्षौणी वत्सेन सव्यशाचिना।**
**युधिष्ठिरोऽपि निर्द्वन्द्वमभ्यसेचि[5] गजाह्वये ॥ 22 ॥**

[ततः प्रविशतः कञ्चुकिनानुगम्यमानौ श्रीकृष्णधनञ्जयौ]

श्रीकृष्णः- [जनान्तिकम्] सखे सव्यशाचिन्!

मद्वचनमुल्लङ्घ्यानिहतकर्णेनागतेन[6] भवता तत्प्रहरणपीडितस्य क्रोधागार-मध्युपविष्टस्य[7] धर्मराजस्य पुरस्तादवहितेन वक्तव्यं व्यवहर्त्तव्यञ्च।

धनञ्जयः- [किञ्चित्समुद्विग्न इव] भगवन्! तस्य हि[8]—

---

1. हत०, क।
2. 'क' मातृकायां नास्ति।
3. ०भास्करौ, क।
4. 'ख' मातृकायामधिकः पाठः।
5. ०षे०, ग।
6. 'क' मातृकायां नास्ति।
7. ०रमुप०,क।
8. 'ख' मातृकायां नास्ति।

वक्तव्ये व्यवहारे च वैगुण्यमपि[1] लीयते।

गुरुर्यस्य जगद्भर्त्ता स्वयं गरुडकेतनः ॥ 23 ॥

**कञ्चुकी-** भवनमिदं महाराजेनाधिष्ठितम्। तत् प्रविशतामायुष्मन्तौ। अहं तावदपरनिदेशेनाभियुक्तान्[2]नियोजयामीति [निष्क्रान्तः]

[उभौ नाट्येन प्रविशतः]

**राजा—** [तावुभौ दृष्टवा[3] सानुमोदम्] देवि पाञ्चालि! पश्य पश्य—

वपुराशु प्रविष्टाया वत्सयोर्विजयश्रियः।

रक्तव्याजाद् विराजन्ते पदालक्तकविन्दवः ॥ 24 ॥

**द्रौपदी—** [अपवार्य] हञ्जे[4] मञ्जुभाषिणि! एदाणं आआरेण कण्णो णिहदोत्ति ण मे पडिभादि।

छाया— [हलामञ्जुभाषिणि! एतयोराकारेण कर्णो निहत इति न मे प्रतिभाति।]

**मञ्जुभाषिणी—** भट्टिणि! मएवि एसो वितक्को अधवा ईरिससोआणं केणवि तारिसा महाभाआ ण विआरिदा होन्तिति सुणीअदि।

छाया-[भर्तृदारिके! मयापि एषो वितर्कः अथवा ईदृशं सौभाग्यं केनापि तादृशाः महाभागाः न विभाविता भवन्तीति श्रुतम्।]

[उभौ राजानं दृष्टवा सत्त्वरमुपगम्य पादौ स्पृशतः।]

---

1. ०मुपनीयते, क।
2. अभियुक्तान्, 'क' मातृकायां नास्ति।
3. विलोक्य, ख।
4. 'क' मातृकायां नास्ति।

राजा— [सहसोत्थाय तावुभौ[1] निर्भरं समालिङ्ग्य हस्तेन मुखं मार्जयन् सब हुमानम्]—

**दृष्ट्वा वां मुदमातनोतु मघवानाशिलष्य भासांपतिः**
**संस्तुत्यापि समस्तनागनृपतिस्तत्तद्विधायापरः।**
**द्वे तावन्नयने तथैव च करौ जिह्वां पुनः केवलां**
**बिभ्राणः कथमस्तु मर्त्य[2]महितौ तादृक् प्रमोदा[3]श्रयः॥। 25॥**

[कृष्णार्जुनौ परस्परं मुखमलवलोकयतः]

[ततः सर्वे यथास्थानमुपविशन्ति]

राजा— भगवन् श्रीकृष्ण!

**भीष्मद्रोणकृपदौणि-दुर्योधनपुरोगमाः।**
**कृतवन्तो न यत्पूर्वं तत्कृतं सूतसूनुना॥ 26॥**

सर्वे[4]षामस्मदीयानां महारथानामग्रे पुनः पुनर्युध्यमानोऽहं[5] तेन निकृत्ताशेष-परिच्छदः शरशकलीकृतसर्वाङ्गः प्राणत्राणपरीप्सुः[6] सन्—

**केतोः कृत्वावतारं निखिलमपनयन्नात्मवि[7]ज्ञप्तिचिह्नं**
**यत्रैवाहं यदा तद् भयविकलमतिर्दूरतोऽपि व्रजामि।**

---

1. उभौ, क।
2. ०स०, क, ख।
3. ०मा०, क।
4. ०यम०, ख।
5. हस्तेन, ख।
6. ०मात्रपरीपन्नः, ख, त्राणवीप्सुः, ग।
7. ०ज्ञा०, क।

**पश्चात् पार्श्वे[1] पुरस्ताद् विसृजदिषुचयं चापहस्तं रथस्थं**

**राधेयानां सहस्त्रं शमनसहचरं तत्तदालोकयामि ॥ 27 ॥**

ततः स दुराशयः समभिद्रुत्य पाणिना मदीयस्कन्धमुपस्पृशन्—'त्वं तपसि ब्रह्मचर्ये च विशिष्टोऽसि। कथं प्रमत्ततया मुर्त्तुकामः समधिकमर्त्य-मायुधान्यायोधने ग्राहयसि'? इत्यभिधाय मद्राधिपेनानुनीतो मृतवन्मन्यमानो माममुञ्चत्। तदा त्रयोदशवर्षं निर्भरनिखातहृदयशल्यमद्य[2] समुद्धृत्य त्वदनुगृहीतः किरीटमाली मामुल्लासमकार्षीत्।

[अर्जुनं प्रति सबहुमानम्]

**यद्यप्यौत्सर्गिकी वत्स! भ्रातृवत्सलता तव।**

**अद्य कर्णवधेनैव सर्वे[3] कर्णिकताङ्गताः ॥ 28 ॥**

तदुद्धृतशल्यक्षतोपशमनाय तद्वधवृत्तान्तः सविशेषं प्रस्तूयताम्।

**धनञ्जयः—** [अपवार्य] भगवन्! कि[4]मयमतिदुर्विपाकप्ररोहः पल्लवं प्रकटयति? अत्र यत्समाधानं तद् भगवतैव निष्पादनीयम्।

**श्रीकृष्णः—** आलस्य[5]समाश्लिष्टा मे रसज्ञा। तद् भवतैव भूतार्था अभिधीयन्ताम्।

**राजा—** वत्स! गुरुजनाज्ञया यथार्थसुकृतिख्यापनेनात्मश्लाघ[6]दोषः।

**द्रौपदी—** महाराअ! पुणो पुणोवि राएसिणा समादिट्ठो [ता] कधं मुअत्तणं अवलम्बेसि?

---

1. ०र्श्व०, क।
2. ०मुद्धृ०, ख।
3. सार्व०, ग।
4. 'क' मातृकायां नास्ति।
5. ०स्यमा०, क।
6. ०घा०, ख, ग।

छाया [महाराज! पुनः पुनरपि राज्ञा समादिष्टस्तत् कथं मौनमवलम्बयसि?]

धनञ्जय— [सलज्जससम्भ्रमम्][1] महाराज! भवदनुमत्या पुरस्तात् संसप्तकान् संप्रविश्य आर्यभीमसेनं भवदन्तिकं प्रस्थाप्य[2] तानपि निःशेषितप्रायान् सम्पाद्य[3] वर्त्मविरोधिनं[4] द्रौणिमपि निर्जित्य कर्णं प्रति प्रतिष्ठमानोऽहमार्य-वृकोदरवदनान्महाराजस्य[5] शिविरागमनकारणमाकर्ण्य[6] गतोच्छ्वसित इव भवन्तमालोकयितुमागतवान्। किं बहुना प्रलपितेन[7]—

त्वामालोक्य पुनर्जीवन् गच्छाम्येष[8] रणाङ्गणे।
अधुनैव भवेत् पृथ्वी निष्कर्णा वा निरर्जुना ॥ 29 ॥

राजा— [सक्रोधाभिनिवेशम्][9] अधुनापि कर्णो वर्त्तते? तत् पलायमानो हि[10] भवान् मत्प्रहरणपीडाप्रशमनाय[11] प्रलपति—

---

1. ससम्भ्रममलज्जम् क, ग।
2. ०सं०, ख।
3. 'ख' मातृकायां नास्ति।
4. वर्सर्त्ता०, क।
5. ०रस्य, ख।
6. 'कारणं' 'क' मातृकायां नास्ति।
7. ०ला०, क।
8. ०था०, क।
9. ०धातिशयम्, क।
10. ०पि, ख।
11. मत्पीडाप्र०, ख

[1]अग्रे साङ्ग्रामिकत्वेन गणनीयोऽसि दुर्मते!।

कर्णमाक[2]र्ण्य सैन्यानां पृष्ठतोऽपि न तिष्ठति ॥ 30 ॥

[शिरो विधुन्वन्] साधु साधु।

सूतसृ[3]तशस्त्रनिरस्तन्स[4]ङ्ग—

सोदर्यमद्य समराच्छिदिरं प्रविष्टम्।

सौ[5]खप्रसुप्तिकतया त्वमिहागतो भूः

किं नाम कातरतया प्रतिपाद्य तेन ॥ 31 ॥

[6]न केवलं कातरतया मन्त्रणयापि युधिष्ठिरस्ताव[7]द्विरत एव। भी[8]ममपि निःसहायं व्यापादयतु क[9]र्णः। ततस्तं निहत्य स्वप्रयोजनसिद्धिं विधास्यामीति।

धनञ्जयः— [अपवार्य श्रीकृष्णं प्रति]

भगवन्! किमियमद्य कुप्रभाता र[10]जनी मे अश्रुतमे[11]व श्रावयति?

---

1. अग्र०, क। आग्र०, ख।
2. ०लोक्य, क।
3. 'ख' मातृकायां नास्ति।
4. ०संज्ञ, क।
5. शौर्य० ,ग।
6. 'ख' मातृकायां नास्ति।
7. ०स्तावद् भीरुरेव, ख।
8. एव०, ग।
9. 'ख' मातृकायां नास्ति।
10. मे रजनी, क।
11. ०मपि, क, ग।

**श्रीकृष्णः—** [अपवार्य] सखे! मूकतैवात्र शरणम्।

**राजा—** अरे धनुर्वेदवैज्ञानिकाभि[1]मानिन्! उच्यताम्—अस्मदीयक्लेशो[2]पशमनाय त्वया कुत्र किं[3] कृतम्?—

**भीमोऽस्मान् जतुमन्दिरात्समवह[4]च्चक्रेऽपि रक्षोबलं[5]**
**स त्रैधं परिवारितञ्च कृतवांश्चौर्याश्रितं सैन्धवम्।**
**कृष्णा विप्रियकारि कीचकशतं तेनैव निर्मूलितं**
**त्वं साङ्ग्रामिकवेशभूषिततनुः किञ्चास्मदर्थे कृथाः ॥ 32 ॥**

[क्षणं विमृश्य] अहह!

**कृष्णसारथि-गाण्डीव-विजयाख्या कपिध्वजाः[6]।**
**शोच्यास्त्वामनुचत्वारो निगमा इव दुष्क्रियाम् ॥ 33 ॥**
**तत्त[7]स्मै गाण्डीव[8]न्देहि यः समर्थो द्विषज्जये[9]।**
**भवे[10]द्विडक्बनायैव दुर्भगानामलङ्कृतिः ॥ 34 ॥**

**धनञ्जयः—** [सक्रोधं चन्द्रहासात् शरग्रन्थिं मोचयति।]

---

1. ०भिन्न, क।
2. शा०, क।
3. किं किं, क।
4. ०हर०, ख।
5. ०वनं०, ग।
6. ०जः, ग।
7. ०त्त्व०, ग।
…न्द०, ख, ग।
…ा जये, ख।
…व०, ख।

श्रीकृष्णः— [सविमर्षं[1] धनञ्जयं[2] प्रति] अये![3]—

आयासेनाभियुक्तश्चेदसिं[4] मोक्तुमिच्छसि। सकोपं मुञ्च, किमकाण्डे मुष्टिग्रन्थिमुद्घाटयसि?[5]

धनञ्जयः— [स्फुरिताधरम्] भगवन्! भवानेव जानाति गाण्डीवमन्यस्मै दीयतामिति यो व्याहरति तस्य शिरश्छेदनं प्रतिज्ञातवानस्मि।[6] प्रमत्तेन राज्ञा तदभिहितोऽहं स्वसङ्कल्पमन्यथा कल्पयितुं न शक्नोमि।

श्रीकृष्णः— [ससम्भ्रमातिशयं चन्द्रहासाद् धनञ्जयहस्तमुत्क्षिप्य][7] धिग् भवन्तम्। भवत्साहचर्येण वर्त्तमानानस्मानपि कोऽयमद्यतनस्ते[8] प्रमोहतमःपटलो, येनाजन्मसञ्चितानि सुकृतानि[9] तिरस्क्रियन्ते?

द्रौपदी— [ससाध्वसमुभयमन्तरा[10] स्थिता]

भो महाभाअ! धम्मराअं ज्जेव प्पहत्तुं प्पहरणं प्पहरसि?

छाया [भो महाभाग! धर्म्मराजमेव प्रहर्त्तुं प्रहरणं प्रहरसि?]

---

1. 'क'-'ग' मातृकयोर्नास्ति।
2. 'क'-'ग' मातृकयोर्नास्ति।
3. 'क'-'ग' मातृकयोर्नास्ति।
4. श्रमेणा०, ख।
5. 'ग्रन्थि' 'क' मातृकायां नास्ति।
6. 'अस्मि' इति 'क' मातृकायां ना॒ ।
7. ०मुष्टि०, ग।
8. ०ना०, क।
9. सच्चरितानि, ख, ग।
10. ०भयान्तरस्थिता, क।

धनञ्जयः— देवि! वचनसत्यताभङ्गभयात् किं न निष्पाद्यते[1]? तत्र प्रमाणं भवत्यास्तथा-नुष्ठानमादिष्टवती मादृशामम्बैव[2]।

श्रीकृष्णः— सखे सव्यशाचिन्! उच्यतामुच्यतां भवता।

अधीतं किं द्रोणात्किमिति[3] सुरपात्किं पशुपतेः
प्रतीज्ञायाः भङ्गः प्रचुरतरदोषो गुरुवधात्।
न कश्चित्कालाहेर्विंशतिवदने[4] वृश्चिकभयात्
स्फुलिङ्गत्रासाद् वा परिपतति मूढोऽपि दहने॥ 35॥

धनञ्जयः— यद्यनुचितम[5]नुष्ठितं मयेति मन्यते माधवेन, तदधुनैव विनिहत्य निरपराधं विधास्यामि।

श्रीकृष्णः— अयमप्यपरस्ते प्रतिज्ञाविस्तरः[6]।

धनञ्जयः— भगवन्! धर्म्माधर्म्मविशेषज्ञ! धनञ्जयैकशरण! तेनैवोपदेशेनाहमनुग्राह्यो, येन प्रतिज्ञाभङ्गदोषाद् गुरुजनेष्वाततायिभावनिरयाच्च निस्तार्यते। तवायं किं कुर्वाणः?

द्रौपदी— [कृष्णं प्रति] भअवण! पाण्डवपअअण[7] साहणे क्कदक्ख दोण्णं[8] विसहाणं विवइअ दोण्णं विसो अवदाणेण दीणतुणस्स अवहरणम्मि

1. ०न्ते, क।
2. तादृशी मयैव, ख।
3. ०मपि, ख।
4. ०लेर्वि०, ग।
5. अद्य समुचित०, क।
6. विस्तारः, क, ग।
7. ०पत्तअण, क, ग।
8. दोन्दं, क।

भअवां[1] ज्जेव गन्धे।

श्रीकृष्णः— सखे सव्यशाचिन्! गुरोरधिक्षेप एव वधः, तं प्रतिपाद्य प्रतिज्ञां प्रतिपाल्यात्मनोऽवधानुकल्पेन प्रशंसनेन प्रायश्चित्तञ्चरित्वा पश्चाद् धर्मराजं प्रसादयिष्यति[2]?

धनञ्जयः— [किञ्चित्क्रोधावेशं युधिष्ठिरं प्रति] राजन्! त्वयाभिनन्दितस्यापि नोत्कर्षो मे निन्दिस्यापि नापकर्षः। तथाहि—

**यत्क्रीडाकरकन्दुकैर्मदगजैर्निमथ्यमाना मुहु-**
**र्लीयन्ते[3] परिपन्थिनः प्रतिदिनं मूर्च्छन्ति यत् क्ष्वेडया।**
**भीमो मां युधि भीरुकं वदति चेत्तन्मे वृथा पौरुषं**
**त्वं पृष्ठे यदि लोचनं वहसि तद् द्रष्टासि[4] मद् विक्रमम्॥ 36॥**

यदुक्तं मत्तः किञ्चिदपि त्वदुपकाराय नाभूत्तत्सत्यम्[5], त्वत्तः पुनरस्माकं सर्वमुपपन्नम्।

तथा हि—

**चक्रं भेत्ताहमस्मि द्रुपदनृपपुरे लब्धभार्यो भवस्त्वं**
**जेताहं क्षत्रियाणां त्वमसि नरपते! राजसूयप्रणेता।**
**त्वं द्यूतं देविताभूः कितवकुरुपतेर्दासभावं गताः स्मः**
**कर्णत्रासात् प्रभग्नस्त्वमसि वितनुषे भीरुकत्वं ममैव॥ 37॥**

1. भअवं ज्येव, ग।
2. प्रमोदयिष्यावः, ख।
3. ०र्नी०, क।
4. तत् स्त्र०, क।
5. नाभूत्स०, क।

श्रीकृष्णः— [धनञ्जयहस्तं निष्पीड्य] द्वयमेव[1] प्रतिपन्नम्। तदलमतिप्रसङ्गेन।

राजा— [सप्रश्रयम्][2] वत्स! मम मनसा मन्त्रयित्वैव व्याहृतवानसि[3]। भीरुणां नृपत्वमभिभवायैव। तद् बलवन्तं भीमं धानुर्वेदिकमात्मानं[4] वा नृपास्पदे समभिषिच्य चिराय चरितार्थीभवन्तु भवन्तः। अहमप्यधुनैव[5] भीरुकोचितं ब्रह्मचर्यं विजनविपिनमाश्रयामि[6][7]। [इत्युत्तिष्ठति। सर्वे ससम्भ्रममुत्तिष्ठन्ति[8]।]

राजा— [धनञ्जयं प्रति सस्नेहमिव] वत्स विजय! विपिनं गतस्यापि मे स्वीयापराधाद्धृदये निर्भरनिखातशल्यद्वयमिदमाचरमसमयादपि[9] स्थैर्यमासादयिष्यति[10]।

अनुक्तमुक्तवानस्मि बाल्यात् प्रियतरे त्वयि।
अश्रुतं श्रुतवानद्य[11] भवतोऽपि[12] प्रियम्बदात्॥ 38॥

---

1. ०वोपपन्नम्, ख।
2. 'ख' मातृकायां नास्ति।
3. ०कृ०, क।
4. ध०, क।
5. अहं पुनरधु०, ख।
6. विचरण, क, विरल, ख।
7. नं गच्छामि, ख।
8. म्भ्रान्त०, क।
9. ०दिवसादपि, ख।
10. ०पा०, ख।
11. ०स्मि, ख।
12. ०द्य, ख।

[द्रौपदीं प्रति] देवि द्रौपदजे[1]! प्रतिमासं षड्दिनान्येव ब्रह्मचर्यया त्वया गमनीयानि।

द्रौपदी— [साश्रुमखी श्रीकृष्णमुखमवलोकयति[2]।]

श्रीकृष्णः— [राजानमुपसृत्य अञ्जलिं बध्वा] महाराज! किमयमकाण्डे[3] क्रोधावेशः? जितायाः पुनरपि[4] वसुन्धरायाः सुयोधनं सम्प्रदानयितुमीहसे?

राजा— भगवन्!

दुर्भगानां वयांसीव भीरुणां नृपसम्पदः।
भवन्त्यहितहास्याय[5] नित्यमुद्वेजनाय च॥ 39॥

श्रीकृष्णः— [राजानमुपसृत्य] महाराज! धर्मादन्यत्र न कुत्रापि ते भीरुकत्वम्। गाण्डीवं प्रति प्रतिज्ञां पालयतः फाल्गुनस्य प्रलापात् प्रचलसि त्वम्?

[युधिष्ठिरस्य हस्तमवलम्ब्य]

नृपतिलक! तवायं नैव युक्तः प्रकोपः
प्रभुरसि भुवनानामाज्ञया किं भवेन्न।
यदि मनसि कृतागः स्यादयं श्वेतवाह-
स्तमहमपि नियन्ता त्वन्निदेशाद्भवेयम्॥ 40॥

धनञ्जयः— [सास्रम्] महाराज!

चन्द्रहासं गृहाणाशु प्रमत्तस्याततायिनः।
फाल्गुनस्य शिरश्छित्वा च्छिन्धि कोपं दयां कुरु॥ 41॥

---

1. द्रुपद्राजं, क, ख।
2. ०मालो०, ग।
3. ०मिद०, ख।
4. 'ख' मातृकायां नास्ति।
5. ०सा०, ख।

[इति राज्ञः पादयोः पतति।]

**श्रीकृष्णः—** महाराज! उभयोर्हितकामस्य ममोपदेशादिदमनार्यमध्यवसितमर्जुनेन तदहमेव शासनीयः।

**द्रौपदी—** [अञ्जलिं बद्धवा] महारअ! भअवणं[1] प्पसाद आचअं[2] कदुअ तत्थ किरणदाए किदलच्छणम्मि[3] अतुणो त्थूललच्छणतुणम्मि, अङ्कयि इत्वं अज्ज[4] वसीअदि।

**राजा—** [ससम्भ्रमं श्रीकृष्णस्य हस्तं हृदये[5] निधाय]

भगवन्! कलानिधिकुलावतंस! कषायभाषणोद्विजितः प्राणनिरपेक्षतया सम्प्रहारायैव[6] प्रवर्त्तते वा। वत्सोऽयं वीभत्सुरिति चिन्तया कारुणवतीयं[7] विरक्तिर्न[8] तु क्रोधावेशेन।

[ततो दोर्म्यां धनञ्जयमुत्थाप्य निर्भरमालिङ्ग्य चाश्रूणि विमुञ्चति। धनञ्जयोऽप्यश्रूणि[9] विकिरति]

**श्रीकृष्णः—** [उभयोरश्रूणि प्रमार्ज्य धनञ्जयं प्रति।]

---

1. ०न्तं, ख, ग।
2. याचअं, क, जात्ययं, ग।
3. ०न०, क।
4. अजधरसीयदि, ग।
5. हृदि, ख।
6. सम्पराये, क।
7. करुणा०, ख, ग।
8. ०रि०, क, ०वि० ग।
9. ०श्रा०, क।

सखे! प्रसादप्रदानकृतसङ्कल्पोऽयं महाराजः कर्णं हत्वैव सम्प्रदाना[1]न्यभि-भवितुमर्हति भवान्।

धनञ्जयः— [खड्गं स्पृशन् सप्रश्रयम्] भगवन्! अधुनैव—

त्रिलोकीत्राणाय प्रहरणभृतः सन्ति युधि ये
प्रयत्नाद् [2]गुप्तस्तैरपि भवति सौतिः समिति चेत्।
अवश्यन्तस्यान्तस्तदपि भवि[3]ता यद्यपरथाद्
भवेदेतत्तन्मे समजनि [4]हि घस्त्रोऽद्य चरमः॥ 42॥

श्रीकृष्णः— सखे! किमिति सङ्कल्पं विकल्प्य व्यामोहयसि बान्धवान्? नूनं [5]तस्यैवायं चरमदिवसः किन्तु स तावत् त्रिभागशेषो [6]हि वर्त्तते। तन्महाराजस्य पादौ स्पृष्ट्वा प्रतिष्ठामहे। [इत्युभौ तथा कुरुतः]

राजा— [ससम्भ्रमं हस्ते गृहीत्वा तावुभौ निर्भ[7]रं समालिङ्ग्य [8]सविनयलज्जम्।]

गोप्ता यस्य जगत्प्रसूतिरतिविश्रान्त्याश्रयः श्रीपति-
र्योद्धा यस्य सुरासुरेन्द्रसुदती गीतप्रतापोऽर्जुनः।

---

1. ०नं भवितु, ख।
2. ०दुप्त०, ख।
3. ०कथा, क।
4. च घस्रोऽद्य, ख। [घस्रो दिनाहनी वा तु क्लीने दिवसवासरौ इत्यमरः।]
5. नूनमस्यैव।
6. 'ग' मातृकायामधिकः पाठः।
7. ०रमा०, ख।
8. सलज्जसविनयनम्, ख।

**निर्णीता हि तिरस्कृताखिलविपत्तस्यार्थसिद्धिः क्वचि-**

**द्यच्चित्रं[1] स्खलयत्यहो बलवती मोहस्य दुःशीलता॥ 45॥**

[श्रीकृष्णं प्रति] भगवन्! यत्किञ्चित् पूर्वाह्ण एव निवेदितम्।

**श्रीकृष्णः—** मयापि तदैवोत्तरितम्[2]। साम्प्रतमावयोर्विलम्बेन तस्यावलम्बनं भवति[3]। तदादिश्यतामावयोर्गमनाय, महाराजेनापि क्रोधागारं परित्यज्य भवनान्तर-मलङ्कर्तुमौपयिकम्।

**राजा—** यद्भवानाज्ञापयति। [इति निष्क्रान्ताः सर्वे]

**इतिश्री श्रीयुत् लक्ष्मणमाणिक्यदेवविरचिते**

**'विख्यातविजयं' नाम नाटके**

**'विजयोद्यमो' नाम**

**तृतीयोऽङ्कः॥**

---

1. ०त्तं क, ग।
2. ०दे०, ग।
3. भविष्यति, ख।

# चतुर्थोऽङ्कः

[ ततः प्रविशति पत्रीं शिरसि निधाय सत्वरः पुरुषः ]

**पुरुषः—** आदिष्टोऽस्मि कौरवकुलमुकुटमाणिक्यमहाराजदुर्योधनेन—[1]'अङ्गराज-सकाशात् पत्रीं वाचयित्वा प्रत्युत्तरमादाय सत्वरमागच्छ' इति। तदहं रुधिरमांसकर्द्दमकु[2]पूयपूर्णवर्त्मनि विसं[3]स्थुलचरणपातैर्विल[4]म्ब्यमानोऽस्मि। [अग्रतोऽवलोक्य सानन्दम्] अये! अनतिदूर[5]त एव करिकक्षाकेतुः कण्ठोत्थमाह्वयतीव मामङ्गराजोपसर्पणाय। [इति सत्वरं परिक्रामति।]

[ततः प्रविशति रथारूढः कर्णः शल्यश्च]

**कर्णः—** सखे मद्रराज!

राजा धर्मसुतोऽद्य यास्यति वनं यद्यस्ति कल्याणभाक्
तच्छोकाद् विगतौजसः खलु भविष्यन्त्याशु तत्सोदराः।
कर्णं [6]मूलमुपाश्रितः कुरुपतेर्दुर्धोनस्याधुना
हर्षः क्षौणिरुहः सहस्त्रशिखरीं विश्वक् शिखं धास्यते॥ 1॥

**शल्यः—** [सस्मितम्] यद्यामूलतो विजयवज्रेण [7]न भिद्यते?

**कर्णः—** सखे मद्रेश! अद्यापि कौरवाणां पुरस्ताद्विजयः सम्भाव्यते?

---

1. यथाङ्ग०, ख।
2. ०पूयवर्त्मनि, क, ०कुपूयवर्त्मनि, ग।
3. ०ष्ठु०, ख, ग।
4. ०म्ब०, क।
5. दूर, ख, ग।
6. नून, क।
7. 'ग' मातृकायां नास्ति।

शल्यः— सखे कर्ण ! केन सम्भाव्यते कौरवाणाम्, स खलु पाण्डवानामेव सम्भावनीयः।

कर्णः— सखे मद्रेश! भवादृशामन्याय्यं स्वपक्षाधिक्षेपि वचनचातुर्यम्।

पुरुषः— [सहसोपसृत्य प्रणम्य] जयति जयत्यङ्गराजः। एषा पत्री प्रहिता महाराजेन।

कर्णः— [ससम्भ्रमं[1] पत्रीं गृहीत्वा दुर्योधननामोपकल्पितं बहिर्मुद्राक्षरमालोच्य[2] शिरसि निधाय मुद्रामुद्घाट्य[3] हस्ताभ्यां विस्तार्य[4] वाचयति।]

'स्वस्ति सुप्रशस्तभुजवीर्यनिरस्तसमस्तशस्त्रभृदाहो पुरुषिके मत्परमसुहृदि विज्ञाप्यते श्वेताश्वस्य संसप्तक[5]समरापयाना[6]द्युधिष्ठिरस्य पराभूति[7]-रैकान्तिकी सम्भाव्यते। किञ्चिद् व्यापारवन्तं वृकोदरमपि निग्रहीतुं प्रतिज्ञाय प्रविष्टोऽयं समरसीम्नि[8] वत्सो दुःशासनः।'

शल्यः— [किञ्चिद् विहस्य] यद्येवं तदा सत्यमेव वृकोदरं प्रविष्टो दुःशासनः।

कर्णः— सखे! श्रूयतामपरम्[9]। [इति पुनः पठति।] तत्क्षणं भवता सह सम्मन्त्र्य पाण्डवानां शिविरोच्छेदनं[10] कर्त्तुमुत्कण्ठतो[11]ऽस्मीति दिक्।

---

1. ०मं विलोक्य, ख।
2. ०रं वाचयित्वा,ख।
3. हस्ताभ्यामुद्घाट्य, क।
4. ०मा०, ख, ०सा०, ग।
5. 'ख' मातृकायाः पाठः।
6. ०प्र०, क।
7. ०भृ०, क।
8. ०मनि०, क।
9. ०मिति, क।
10. ०दं, ख, ग।
11. ०सुको, क, ग।

[ततः पत्रीं सम्वृत्य पुरुषं प्रति]

प्रतीहार! महाराजस्तावत् किमाचरति?

**पुरुषः—** गुरुपुत्रेण सह केनचिद् विस्रम्भालापेन वर्त्तते।

**कर्णः—** सखे मद्राधिप! अहमपि क्षणं वत्सवृषसेने समरभारं निक्षिप्य निरायासो भवितुमिहायातोऽस्मि। तन्महाराजसविध[1]मेव साधयावः।

**शल्यः—** यथाभिरुचितन्ते। **[इति रथवेगं निरूपयति।]**

**[नेपथ्ये कलकलः]**

**कर्णः—** [ससम्भ्रमम्] सखे! किमयं मथ्यमानमर्हाणवनिर्भरनिनदगम्भीर[2]घोरघोषः सैन्यानामुत्तरेण हस्तं श्रूयते?

**शल्यः—** **[रथं स्थापयित्वा आकर्णयति।] [पुनर्नेपथ्ये]**

**गजता-जनताश्वीय-रथकट्याः समन्ततः।**

**वृषसेनं परित्यज्य पराङ्मुख्यमुपाश्रिताः॥ 2॥**

**कर्णः—** सखे मद्रेश! वृकोदरस्तावत् समासादितो दुःशासनेनैव। तत्कथमुद्विग्नास्मद्वरुथिनीयं व[3]त्सवृषसेनं विहाय वि[4]द्रुतेव दृश्यते? भार्गवास्त्र[5]मपि प्रशान्तमिव लक्ष्यते। तत् क्षणं तदवगन्तुमुत्कण्ठितोऽस्मि।

**शल्यः—** [रथं परा[6]वर्त्य किञ्चित्तद्दिशि देशयित्वा निपुणं नि[7]रूप्य समम्भ्रममङ्गुल्या दर्शयन्]

---

1. ०धं सा०, क।
2. 'क' मातृकायां नास्ति।
3. ०त्सं, ख।
4. द्रवन्तीव, ख।
5. ०स्त्रसमूहं, क।
6. ०वृत्य, ख, ग।
7. निरीक्ष्य, क।

सखे कर्ण !

स एष[1] जम्बूनदजालजृम्भितः

शशिप्रभामण्डलशुभ्रसैन्धवः[2]।

रथो रथाङ्गायुधसारथिस्त्वया

[3]नालोक्यते किं कपिराजकेतनः? ॥ 3 ॥

अपि च—

ऊर्ध्वाधः क्षिप्तमूर्द्धास्तिमितविकसित-भ्राम्यदाताम्रनेत्रः।

क्षुभ्यद्भग्नाग्रपुच्छः प्रकटितदशनः कुञ्चदोष्ठाधराग्रः॥

उद्भ्रू[4]रुत्तानघोणो ध्वजशिखरगतश्चारुनृत्यन्निवार्यं

चीत्कारैः शात्रवाणां स्नपयति हृदयं साध्वसाध्वे[5] कपीन्द्रः॥ 4 ॥

शल्यः— सखे कर्ण! गाण्डीवगहनविस्फार[6]श्रवणमात्रादुपर्युपरि पततपत्तिपीतिमातङ्ग-शता[7]ङ्गसंघभङ्ग[8]भयविहस्ता समस्तवरूथिनीयन्ते विभज्यमानैव विभाव्यते, एतदप्यवधीयताम्—

---

1. ०व, क।
2. ०सि०, क।
3. वि०, क।
4. ०भू०, क।
5. ०ध्वौ०, ख, ०द्वै, ।, ग।
6. ०रण०, ख।
7. 'ख' 'ग' मातृकयोर्नास्ति।
8. 'क' मातृकायां नास्ति।

श्रुत्वा सम्प्रति देवदत्तमसकृद् वीभत्सुना ध्मापितं
यद्वाणाम्बुलयं[1] नयन्ति वपुषि त्रासाद्द्रवन्तो[2]ऽभितः।
व्यस्तैर्हस्तिपकैः कृताङ्कुश[3] इति प्रोद्भूतचीत्कारिण-
स्तन्मूत्रच्छलतो मुहुर्मुहुरमी मुञ्चन्ति दन्तावलीः॥ 5॥

**कर्णः—** [सहर्षामर्षहासम्][4] सखे शल्य! किमन्यदाशंसनीयम्? ममैव—

यस्मै[5] कौरवकेशरीमधिधुरं[6] निःक्षिप्य[7] विक्षिप्तभी-
राबाल्यान्मनसो न चास्ति विरतिर्यद्वाञ्छतः सन्ततम्
तस्मै[8] द्वैरथमर्जुनेन भवता दद्यद्द्रुतं स्यन्दनं
राजन्! देशय देवदत्तनिनदैरुन्निद्रितायां[9] दिशि॥ 6॥

**शल्यः—** सखे कर्ण! अधुना धनञ्जयस्य—

अन्यैव चापविस्फूर्तिरन्यैव कपिचीत्कृतिः।
अन्यैव स्यन्दनावृत्तिरन्य एवाम्बुज[10]ध्वनिः॥ 7॥

---

1. ०द्वाना०, ख, ग।
2. ०ब्रु०, क, द्ध०, ख।
3. ह०, ग।
4. सहर्षसहासम्, ख।
5. ०स्मिन्, ख। [यस्मैद्वैरथाय, क।]
6. ०यि, ख।
7. ०वि०, ग।
8. ०न्मे, ख, ग।
9. उन्निद्रितायाम्=पूर्णायाम्, क।
10. ०ह्व, क।

तन्मन्ये भवतो धर्मराजधर्षण[1]मवधार्य निर्भरामर्ष[2]दशामापन्नोऽयं[3] तत्प्रतिचि[4]-कीर्षुर्भवन्तमेवानुसन्धत्ते। तद् भवानपि सहसा तत्सामुख्ये समभिवर्त्तितुं साम्प्रतमसाम्प्रतं वेति[5] चेतसि चिन्तयतु।

कर्णः— [सस्मितम्] सखे मद्रेश[6]!

त्रैलोक्याद्भुतविक्रमो[7]द्भटभुजौ[8] यौ विश्रुतौ विश्वत-

श्चक्रं पाशुपतं ययोः प्रहरणे कर्मापि तत्तादृशम्।

तावेकं रथमास्थितौ प्रतिभटा[9]वालोक्य कर्णं विना

कस्तादृग् युधि कार्मुकी जयति यस्तत्रा[10]भ्यमित्रौ भवेत्॥ 8॥

[धनुर्ज्यां परिमृज्य] भो मद्रेश!

जयोऽस्तु कृष्णार्जुनकार्म्मुको मे

बधोऽपि[11] कृष्णार्जुनकर्त्तृको वा।

---

1. ०ध०, ग।
2. आमर्षः=क्रोधः, क।
3. ०ऽहं, क, यस्त०, ख।
4. प्रतिचिकीर्षुः=प्रतीकारकर्त्तुमिच्छुः।
5. वा, क, ग।
6. ०द्राधिप!, क।
7. ०मौ०, ख।
8. ०जो, ग।
9. प्रतिभटौ०=विपक्षौ, क।
10. ०स्याभ्य० क, ०त्राद्य, ख।
11. ०ऽस्तु, ख, ग।

लब्धोऽस्मि[1] यत्रोभयथा प्रकर्षं
किन्तत्र[2] मागच्छिकतामुपैषि[3]?॥ ९॥

शल्यः— सखे! कर्ण! नाहं निषिद्धोऽस्मि। भवन्तमन्तरेण कृष्णार्जुनयोर्द्वन्द्वयुद्धे[4] साम्मुख्यश्लाघायां न कश्चिदपरः साधीयान्, किन्तु कुरुराजस्यापि जयाशा त्वय्येव। तत्सहायसम्पन्नो हि भवां स्तु तत्तादृशमभिसम्पातमङ्गीकुरुता-मित्यभिप्रायेणाहमुपदिष्टवानस्मि।

कर्णः— [सस्मितम्] सखे! विदिताशेषवीरवृत्तान्तोऽसि। तदावयोस्तादृशि[5] सम्प्रहारे मदीयस्त्वदीयो[6] वा न कश्चित् कस्यचित्सहायकं साधयितुमुपयोक्ष्यते[7]।

शल्यः— तस्य शार्ङ्गधन्वैव[8] सहायः[9]।

कर्णः— [सस्मितम्] सखे! सत्यमेतत् किन्तु ममापि भवान्।

शल्यः— [सपरितोषम्] सखे कर्ण! शकुन्तराजकेतुसादृश्येन भवता[10] सम्भावितोऽहं भवज्जयाय यथाशक्ति यतमानः समभिवर्त्तिष्ये।

---

1. ०ब्धा?०, ख, ग।
2. ०न्त्व०, ख।
3. उपैषि=प्राप्नोषि, क।
4. युद्धेन, ग
5. ०श०, ख।
6. ०स्त०, क।
7. ०क्ष०, क।
8. शार्ङ्गधन्वा=विष्णुः,क।
9. ०यता, क, ग।
10. 'ख' 'ग' मातृकयोर्नास्ति।

[इति सैन्धवान्[1] समाश्वास्य युगादीन् दृढतरं योजयित्वा रथवेगं विचित्रयति।]

**कर्णः—** [उद्दण्डदोर्दण्डेन विजयकोदण्डं भ्रामयित्वा सप्रश्रयम्।]

सखे शल्य!

**सत्यं सत्त्वमयं वपुर्मुरभिदः श्रुत्युक्तिसम्भावितं**
**तच्छस्त्रेण रजोमयं युधि मुहुः सम्पादनीयं मया।**
**तादृग् विश्वविलक्षणक्षमतया ख्यातिं क्षितौ ख्यापयन्**
**शोच्यो[2] नैव हतोऽपि कस्य वपुषः क्वास्ते चिरस्थयिता॥ 10॥**

अपि च—

**मद्वीराध्वनि[3] फाल्गुनश्चलति चेत् प्राणेप्सया[4] न्यायतो**
**नो चेदुद्व्रजति[5] प्रसारयति चेच्चक्रं न चक्रायुधः।**
**तत्तस्याद्य शिरः सुतीक्ष्णविशिखैश्छेत्स्यामि शाठ्येन चे-**
**ज्जैत्रः स्यादयशःपदं[6] स भविता लब्धास्मि धाम ध्रुवम्॥ 11॥**

**पुरुषः—** अङ्गराज! किमाज्ञापयति[7] माम्?

**कर्णः—** प्रतीहार! क्षणं तिष्ठ, प्रत्युत्तरपत्रीं गृहीत्वा गच्छ।

---

1. सैन्धवान्=घोटकान्, क।
2. ०च्या, क, ग।
3. स०, ग।
4. ०च्छ०, ख।
5. ०द्वैभजति, क, ०त्त्वद्व्रजति, ग।
6. ०प्र०, क।
7. ०सि, ख, ग।

[ नेपथ्ये कलकलः ]

कर्णः— [ससम्भ्रमम्] मद्रराज! दक्षिणपश्चिमायान्दिशि कथमयमुस्थितो[1] महान् शब्दः? [इत्युभौ सावधानमाकर्णयतः]

[ पुनर्नेपथ्ये ]

श्रीमान् हिरण्यकशिपुस्त्रिदशानि राजौ[2]
दुःशासनः प्रचुरपाण्डुभटान् ममर्द।

कर्णः— [सहर्षम्] साधु कुमारदुःशासन! साधु। समय एव वत्सवृषसेनस्य सहायकं साधयसि[3]।

[ पुनर्नेपथ्ये ]

भीमस्य भीमनरकेशरिणः स एष[4]
दोर्दण्डपाशपरिवेशमुपाश्रितोऽभूत्॥ 12॥

कर्णः— [श्रुत्वा सविषादम्] आ! किमयं भीमस्य भुजपाशमुपाश्रितोऽभूत्? सखे मद्रेश! तस्यां हरिति[5] दिश्यन्तां हरयः। कुमारं मोचयित्वा माधवार्जुनयोः साम्मुख्यं साधयिष्यामि। [शल्यस्तथा कर्तुमिच्छति।]

[ पुनर्नेपथ्ये ]—

कृत्वा वक्षस्तडागं द्रुतमसिलतयापूरयित्वोच्छलद्भि
र्मर्मासृग्जीवनौघैर्द्रुपदनृपसुता-कुन्तलाकर्षकस्य।

---

1. किमय०, ख।
2. वा०, ख, ग।
3. ०यामि, क।
4. ०व, क।
5. दिशि, ख।

तत्रोत्तापप्रशान्त्यै प्रचुरमभिपिवन् क्षालयन् स्विन्नमङ्गं[1]
गर्जत्युच्चैर्युगान्तोन्नतजलद[2] इव क्रोधनो भीमसेन॥ 13॥

कर्णः— [श्रुत्वा[3] सातिशयविषादम्] हा दुःशासन! हा दुर्योधनैकप्रियतम! हा युवराज! मयि जीवति किमिदमुपपन्नम्? कथं वा महाराजस्य मुखमवलोकयिष्यामि[4]? तत् साम्प्रतमसाम्प्रतं वा तापनेतारं[5] भीमं हत्वा त्रपातरङ्गितशोकसागरपारमधिव्रजामि[6]।

[नेपथ्ये दक्षिणतः]

विजयविशिखसङ्घैःर्विद्धमर्मा सुशर्मा
हृदि हृदिकतनूजः पीडितो मूर्च्छितोऽभूत्।
शकुनिरिह शकुन्तप्राय उड्डीय यातः
कृपण इव कृपोऽपि प्राणमीप्सन्नधावत्॥ 14॥

अपि च—

भग्नेषु कुरुसैन्येषु शराणां सव्यशाचिनः।
केवलं वृषसेनो[7] हि शरण्यं समपद्यत[8]॥ 15॥

---

1. क्षिन्न०, क, शीर्ण/खिन्न० ख।
2. ०न्नु०, ग।
3. ०त्वातिशय०, ख।
4. ०यामि, ग।
5. प्राण०, ख।
6. 'क' मातृकायां नास्ति।
7. ०ऽद्य, ख।
8. ०ते, क।

कर्णः— [सत्रासं परावृत्य] सखे मद्रमहेन्द्र[1]!

इतो भीमः क्रूरो नृपतिसहजन्मानमवधी-
दितः क्रुद्धो वत्सं व्यथयति शरौधेण विजयः।
न मे चेतः स्थैर्य द्रढयति सखे! कुत्र गमनं
विधेयं तद् ब्रूहि त्वमपि सदसद्वाक्यविषयः॥ 16॥

शल्यः— सखे! एकस्तावत्कृतान्तेन कवलित एव, कवलीक्रियमाणमपरं त्रातुमौपयिको व्यापारः?

कर्णः— समुचितमुपदिष्टं भवता। तत्तरसा तत्रैव रथं प्रापय। [इत्युभौ रथवेगेन परिक्रामतः] [ततः प्रविशति[2] सत्वरः पुरुषः]

पुरुषः— परित्राहि परित्राहि अङ्गराज! परित्राहि।

कर्णः— अये! शरशकलीकृतसर्वाङ्गः[3] प्रसवद्रुधिरधाराधौतकलेवरः[4] कोऽयं तावत्?

[निपुणं निरूप्य सोद्वेगम्] कथं वत्सवृषसेनस्य सारथिः सुकर्मा?

सुकर्मा— अङ्गराज! कुतः साम्प्रतं कुमारस्ते वृषसेनः? [इति स्वशिरसि ताडयित्वा रोदिति।]

कर्णः— [सचमत्कृतिविषादम्] आः। कुतो[5] मे वत्सवृषसेनस्त्वया न ज्ञायते?

सुकर्मा— [सास्रम्] अङ्गराज! अधुना कथं ज्ञातुं शक्यते?

कर्णः— तं परित्यज्यैव विद्रुतोऽसि?

सुकर्मा— एतदपि किं भवति?

---

1. मद्रेश, ख, ग।
2. ०श्य०, ख, ग।
3. ०स०, ख।
4. श्र०, ग।
5. ०तोऽयं, क।

कर्णः— [शल्यं प्रति] सखे! स्वप्रहरणपीडितोऽयं[1] किं प्रलपति।

शल्यः— त्वमपि मुहुर्मुहुः किं पृच्छसि?

कर्णः— अये[2] सुकर्मन्! कथय केन वर्त्मना कुत्र गतो मे वृषसेनः? झटिति तमनुसन्दधामि।

सुकर्मा— सव्यशाचि[3]शरधारासरणिमाश्रित्य महेन्द्रलोके लोके[4]श्वरलोके वा गतः।

कर्णः— हा! हतोऽस्मि। [क्षणं तूष्णीं स्थित्वा] हा धिक्—

**किं मे मर्म सहस्त्रधा विदलितं किं कालचक्षुश्रवः**
**संघैः संहननं हलाहलसमुत्क्षेपेण संक्षेपितम्[5]।**
**सर्वे व्याधय इन्द्रियाणि युगपत्सर्वाणि किं प्राविशन्**
**किं मुर्द्धन्यशनिं न्यपातयदहो वज्रीसुतस्नेहतः ॥ 17 ॥**

[इति रथोपरि कोदण्डं क्षिपति।]

शल्यः— सखे कर्ण! किमधुना शस्त्रत्यागेनैव दुःखं प्रमार्ष्टुमध्यवसीयते?

कर्णः— [अश्रु[6]ताभिनयं चक्षुषी निमिल्य] वत्सवृपसेन!

**सङ्ग्रामादनिवर्तिना प्रतिभटप्राणान्तवैज्ञानिकैः**
**पित्रा मे खलु फाल्गुनप्रहरणैः शेषं समाधास्यते।**
**द्रष्टव्यं किमिदं मयेति कृपया प्राणानहासीः पुन–**
**र्धिग्वात्सल्यमदस्त्वदीयमचिराद्येनास्मि निर्मूलि[7]तः ॥ 18 ॥**

---

1. प्रहार, ख
2. ०रे, ख, ग।
3. ०श०, क, ख, ग।
4. सुरे०, ख।
5. ०तः, क।
6. ०येन, ख।
7. ०तम्, ख।

अथवा तादृक्सम्प्रहारसम्प्रवर्तिनं[1] मामवधार्य—

**माहेन्द्रेण[2] हृतं[3] वर्म्म कुण्डलेन च्छलेन मे।**

**तत्र किं तत्त्वमाहर्त्तुं[4] मदर्थे गतवानसि?॥ 19॥**

[सविषादाधिक्षेपमाकाशे] साधु रे सव्यशाचिन्! साधु,

**सत्यं धानुष्कमुख्योऽसि द्वन्द्वं प्रार्थयतो मम।**

**वर्म्मचर्माप्यनिर्भिद्य मर्माण्येवाभिनः[5] शरैः॥ 20॥**

[इत्यश्रूणि मुञ्चति।]

**शल्यः—** सखे कर्ण! भवद्विधस्तावदेवम्विधशोकदहनमश्रुधारया प्रशमयितुमीहते,[6] न पुनः प्रहरणधारया।

**कर्णः—** [किञ्चित्सावष्टम्भम्] सखे! साधु, साधु। त्वद्विधसदृशोऽयं परामर्शः। तथा हि—

**न तत्पुरुषपाटवं रिपुमुपेक्ष्य यत्तादृशं**

**विवेकमभिसंश्रयंस्त्यजति दक्षतामात्मनः।**

[इति कार्मुकमादाय ज्यां परिमृज्य सातिशयावष्टम्भम्।]

---

1. ०वर्ति०, क।
2. म०, ख, ग।
3. कृ०, क।
4. ०त्स०, क।
5. मर्म, क, ख।
6. ईहते=चेष्टते, क।

आपाण्डुयदुसन्ततिं[1] धरणि[2]मद्य दुर्योधने

समर्प्य हि समाधिना प्रशममाश्रयिष्ये शुचः ॥ 21 ॥

[पुरूषं प्रति] अरे प्रतीहार! सुकर्माणमेनं महाराजस्य सविधं प्रापय, विज्ञापनीयञ्चैतत्—

विनिहतयादवजिष्णुर्भीमासृग्वि[3]लिप्तसर्वाङ्गः।

त्वां प्रतिपत्ता कर्णः किम्वा त्व[4]द्दर्शनाभावः? ॥ 22 ॥

पुरुषः— यथाज्ञापयत्यङ्गराजः। [इति सुकर्माणमादाय निष्क्रान्तः।]

कर्णः— [साभिनिवेशं चापं विस्फार्य मद्रराजं प्रति]

यदर्थं ज्यापतिज्येष्ठः य[5]न्तृत्वेनासि याचितः।

तस्यायं समयस्तन्मां द्रुतं योजय जि[6]ष्णुना ॥ 23 ॥

शल्यः— [रथवेगं निरूपयित्वा] सखे। पश्य, पश्य—

यत्र संयोगमाकाङ्क्षत्पुरः[7]स्फुरति लोचनम्।

पृष्ठतस्तन्निधायाशु तत्र यान्ति तुरङ्गमाः ॥ 24 ॥

कर्णः— [पुरतोऽवलोक्य सखेदाधिक्षेपम्] सखे मद्रेश! साम्प्रतमपि कर्णकोदण्ड-

---

1. अ०, क, ख।
2. ध्वनि०, ख।
3. सृग्लि०, ख, ग।
4. त०, ख, ग।
5. ०न्त०, क।
6. वि०, क।
7. ०स०, क।

विस्फारैः[1] स्फुरति सर्व[2]कौरववीर[3]ब्रुवा वैमुख्यैनैव वर्त्तन्ते।

[सरोषमुच्चैः]—

भो भो कौरव[4]राजवेतनभुजः शश्वद्भुजःश्लाघिनः

प्रज्ञाविक्रमवाक्प्रबन्धविभवैर्जल्पाकसंसद्गृहाः।

किं वो मृत्युवत[5]स्तनोतु विपदं युष्मादृशैस्तादृशै-

र्यत्पृष्ठं रिपवे प्रदाय वदनं भर्त्तुः समालोक्यते ॥ 25 ॥

आस्तथापि विद्रवन्त्येव? अथवा किमेभिर्ज्यास्पर्शनमात्रधनुर्द्धरैर्विद्रुतैः स्थितै र्वा?

सखे मद्रेश! तदेतान् पृष्ठतः कृत्वा प्रापय स्यन्दनं पुरन्दरनन्दन[6]नेदिष्टम्।

शल्यः— [तथा कुर्वन् समुद्ग्रीवम्] सखे कर्ण! पश्य, पश्य—

ध्वजमिह[7]करिकक्षामाभिमुख्येन दृष्ट्वा

हरिरपि कपिकेतोः स्यन्दनं देशयित्वा।

दनुजपुरनतभ्रूभ्रूणहत्यानृशंसै-

र्मुखरयति दिगन्तान् पाञ्चजन्यप्रणादैः ॥ 26 ॥

अयमयं फाल्गुनोऽपि—

---

1. ०रे, क।
2. ०र्वे, क, ०र्वकौरवाः, ख।
3. 'ख' मातृकायां नास्ति।
4. ०भूप०, ख।
5. ०ति, क।
6. ०नेना०, क।
7. गजकक्षाना०, ख। ०करिकाक्ष्याना०, ग।

परिमृजित[1]धनुर्ज्या[2]: प्रोञ्छ्य पश्यन् पृषत्का-

न्मुहुरुपचितगुल्फं[3] मार्जयन्नङ्गुलीभिः।

विगतनिमिषनेत्रः पश्यति त्वामजस्त्रं

द्रढयति च किरीटीं[4] पाणिना दक्षिणेन॥ 27॥

[ततः प्रविशतो यथानिर्दिष्टौ श्रीकृष्णधनञ्जयौ।]

श्रीकृष्णः— [पाञ्चजन्यं पूरयित्वा] सखे सव्यशाचिन्। पश्य, पश्य—

मद्रेश्वरसन्देशितशरदिन्दुसुन्दरसैन्धवसमाकृ[5]ष्टकरिकक्षाविशिष्टसुमृ[6]ष्ट-शातकुम्भकिङ्किणीकलकलीकलितकाञ्चनाञ्चलविविधकौशेयपताकापरि वारितो रथोऽयमाधि[7]रथेरित एवाभिवर्त्तत इव लक्ष्यते। तथा हि—

आसक्ता[8] धर्मराजे यदपि जलधिजानिर्भरं यद् भयार्ता

किञ्चिद् वामाक्षिकोणं क्षिपति कुरुपतौ विप्रिये[9]ऽपि प्रियेव।

---

1. ०दि०, ग।
2. ०र्ज्य:, ग।
3. ०म्फं, क, ग।
4. ०टं, क।
5. ०हृ०, क।
6. ०सृ०, ख।
7. आधिरथे:=कर्णस्य।
8. ०शक्रा, क।
9. ०यो०, ख

सोऽयं पुत्रप्रमाथप्रसृमरहृदयः[1] क्रोधवह्निस्फुलिङ्गान्

दृष्ट्वा मुञ्चन्निवैति द्रुतमुपरि तव द्वन्द्वमाकाङ्क्षमाणः ॥ 28 ॥

तत् सर्वत्र सावधानेन समभिवर्त्तितुमुपयुज्यते प्रियसुहृदा।

धनञ्जयः— भगवन् श्रीकृष्ण!

आकल्पं कल्पयिष्यन्ति[2] यत्त्रिलोकीनिवासिनः[3]।

परापतितमद्यैव युद्धन्तदिदमद्भुतम् ॥ 29 ॥

तत् समुपस्थितोऽयं समयः समीचीनः[4]। सत्वरं तदभिमुखमेव सन्दिश्यन्तां सैन्धवाः।

श्रीकृष्णः— [तथा कृत्वा सकरुणदृशा धनञ्जयमवलोकयन्] सखे!—

चिन्तयन् यस्य[5] दोर्दर्पं न निद्राति तपःसुतः।

अवजानाति दुष्टात्मा[6] युष्मानपि सुयोधनः ॥ 30 ॥

तस्यैव दोर्बलविलोडितमागधस्य

द्वन्द्वैषिणो विजयकार्मुकिणस्त्वयाद्य।

आविर्बभूव मृधमेकविरामशेष-[7]

माः किं विधेर्मनसि मूर्च्छति[8] तन्न वेद्मि ॥ 31 ॥

---

1. ०व० ख, ०व० ०य, ग।
2. कीर्त्त०, क।
3. ०न्त्रि०, ख।
4. 'ख' मातृकायां नास्ति।
5. यस्य=कर्णस्य, क
6. स्वस्मा०, क।
7. मुध०, क।
8. ०त्त्व०, क।

**धनञ्जयः—** [सस्मितम्] भगवन्! तपन[1] यदि जायते[2], जयांतं मामाधिरथिस्तद्द्भवान्[3] परिगृह्यमाण प्रहरणो[4] महाराजधर्मधुरन्धरविजयार्थं[5] किं विधानः स्यात्?

**श्रीकृष्णः—** शान्तम्, शान्तम्। एतदपि किमाशङ्कनीयम्? निर्भरस्नेहोत्तरलितचेतसा[6] मया यद्विकल्पितं तदेव भवन्तं भ्रामयते[7]? न स्मरसि राज्ञः पुरस्तान्मया यदभिहितमिति? [**कृष्णो जीवतीत्यादि** पुनः पठति।]

**धनञ्जयः—** [सप्रश्रयम्] भगवन्! भवदनुकम्पापम्परया प्रतिपन्नस्य समस्तसुरासुर-धनुर्द्धरेभ्योऽपि न मे शङ्कितव्यम्[8], किं पुनः सूतसूनोः? [साटोपम्] प्रेरय झटिति शताङ्गं सङ्गरमद्यावयोः[9] सुपर्वाणः पश्यन्तः श्लाघन्तां स्वीयमपि च निर्निमेषत्वम्।

**कृष्णः—** [तथा करोति[10]।]

**शल्यः—** सखे कर्ण! अधुना युवयोरन्तराले न किञ्चित्तिरोधानं, तद्भूयतामवहितेन।

**कर्णः—** सखे शल्य! सदैवावहितोऽस्मि। तद्वाक्यश्रवणयोग्यस्थाने स्थापय मे रथम्। [शल्यस्तथा करोति]

---

1. 'तपन' 'क' 'ख' मातृकयोर्नास्ति।
2. जातु, ख, ग।
3. ०म्भ०, ख।
4. ०णे, क।
5. 'क' 'ग' मातृकयोर्नास्ति।
6. ०रित०, क।
7. ०ति, ख।
8. रक्षि०, क।
9. सङ्गम० क।
10. 'ग' मातृकायां नास्ति।

कर्णः— अरे रे धनञ्जय!—

आबाल्यात्कुरुराजमैत्रवसतो यद्वैरमौत्सर्गिकं
युष्मास्वस्ति चिराच्छयालु सुतरां किन्तु त्वया साम्प्रतम्।
तादृग् मद्वृषसेनशातनविधिर्हेतुः समुत्थापितो
जाग्रद्येन फलप्रदं झटिति तत्त्वय्येव सम्पत्स्यते॥ 32॥

धनञ्जयः— अरे रे सुयोधनसख[1]! न खल्वयमसाधारणो[2]ऽध्यवसायः?॥

कर्णः— कथमिव?

धनञ्जयः— अरे! विस्मृतं किमिव भवता सौभद्रनिधनविधानम्? किन्तु किञ्चिदेवात्र वैशिष्टमधिगच्छामि। यन्मया केवलेनैव भवत्पुरस्तादपि व्यापादितस्ते वृषसेनः।

कर्णः— अरे रे पृथाचरमगर्भजात! कर्णस्य कोऽयं नवावतारो विक्रमस्य यत्प्रतिहतस्तव तनूजो भ्रातृजो वा समासादितशमनसदन[3]प्रायाः कारुण्य-वशाद् भ्रातरो वा यत्परावर्तिताः?

धनञ्जयः— [सरोषस्मितम्] अरे रे राधाजठरजात[4]! वृथाविकत्थन!—

तावत्त्वं[5] रसनाप्रतानमसकृत्सम्भावय स्वेच्छया
गाण्डीवं मम निर्जरारिनिवहे शश्वद्यदुज्जृम्भितम्।
एकस्मिन् रथकारजन्मनि पुनस्तन्मे गुणोत्कर्षणं[6]
हा धिक् किं भवितेति दैन्यमधिकं यावत्क्षणं मुञ्चति॥ 33॥

---

1. ०खा, क।
2. ०णा, क।
3. समनसद्मसमासादित, ख।
4. राजकुठारजात, ख।
5. ०त्त्वद्र०, क, ०त्त्वं रसप्र०, ख।
6. ०णः, क।

**कर्णः—** [स्वगतम्] अये! अयमनभिज्ञतया मत्सम्भवमन्यथा सम्भाव्य व्याहरति? अत्र प्रतिवचनविधानेन[1] वैधेयोऽस्मि। भवतु [प्रकाशम्] अरे रे वचन-चातुरी मात्रवैज्ञानिक!—

**सत्यं त्वत्सदृशोऽस्ति नैव भुवने कर्मापि तत्तादृशं**
**सारथ्येऽपि[2] जयत्यशेषजगतां जैत्रो जगन्नायकः।**
**पुत्रेणापि भवद्विधेन विधिवद् वीरव्रतश्लाधिना**
**भिक्षां जम्भभिदप्यहो जनयिता प्राणेप्सुना कार्यते[3] ॥ 34 ॥**

**श्रीकृष्णः—** अये कर्ण! प्रायः सुकृतिनां कार्ये[4] देवा यान्ति सहायतामित्युदाहरन्ति पुराविदः।

**कर्णः—** भगवन् श्रीकृष्ण! भवति सहाये[5] सत्यपरेषां सहायता, सर्वत्र[6] लघुतामेव विस्तारयति।

**धनञ्जयः—** अरे असम्बद्धप्रलापिन्! विस्मृतं द्रुपदनगरे चक्रभेदनादिविधाने[7] मत्स्यनगरे गोग्रहे वा निःसहायस्य मे पुरस्तात् किमारम्भो भवानासीत्?

**कर्णः—** [सहासम्] अरे[8] निस्त्रप! स्वीयविवाहपरिपाटी[9] प्रस्तूयते? श्रूयन्तान्तावत्—

---

1. विधाने, ख, ग।
2. ०थो०, ग।
3. ०चर्यते, ख।
4. ०र्य, ग।
5. ०य, क
6. ०त्रैव लघुतां, क।
7. ०दादि०, क।
8. ०ये, ग।
9. विराव, ख।

कृष्णा लक्षणतस्तदैव हि मया ज्ञाता स्फुटं[1] तादृशी

मोघं भूपतिमण्डलस्य महिमग्लानिं विधास्ये कथम्।

इत्यस्माभिरुपेक्षितेन विधिना त्वं श्लाघनीयोऽसि रे!

राधाचक्रशतं शरेण युगपत् कर्णो[2] न भेत्तुं क्षमः ॥ 35 ॥

तत्रापि प्राणरक्षार्थं ब्राह्मण्यव्यपदेशिना

कर्णमायान्तमाकर्ण्य[3] भवता पर्य्युपस्थितम् ॥ 36 ॥

यद्वा विराटविषयवृत्तान्तं[4] विस्तारयति, तत्तस्मिन्नुत्तरसारथिर्भवान् सामर्थ्येन कारुण्येन वा यन्न मया निसूदितस्तद्भवत्सारथ्यमधिगतः श्रीमान्[5] पुरुषोत्तम एव क्षणमात्रात् प्रकाशयिष्यति[6]।

धनञ्जयः— अरे रे अनात्मज्ञ! असदृशतया मुहुर्मुहुर्मत्प्रहरणात् प्राणान् प्रमोच्य प्रमत्तवत् प्रजल्पसि[7]? तदधुनैव—

सुयोधनजयाशाभिर्द्रौपदीदीर्घमन्युना।

धर्मराजमनस्तापैश्छेत्स्यामि भवतः शिरः ॥ 37 ॥

कर्णः— [सक्रोधम्] अरे पाण्डव! किं षण्डवद् वाक्ताण्डवैर्मां भीषयितुमीहसे? तत्कोदण्डपाण्डित्यं प्रकटयन्निष्पन्नं नाकपालिनः कपालपालिनो[8] वा?

---

1. ०टस्ता० ग।
2. भेत्तुं न कर्णः, ग।
3. ०लोक्य, क।
4. वृत्तं, क।
5. श्रीभगवान्, क।
6. ०ते, ख, ग।
7. प्रलपसि, ग।
8. कपालिनो वा, ख, ग।

तथा हि—

**तातस्ते सुरनायकः कुरुनयाप्याशंशिता दुर्जयं**

**शस्त्रग्रामगुरुः पुरां प्रशमकृद् भूभृत्सुतावल्लभः[1]।**

**यन्ता यज्जगदीश्वरो मुरहरः कर्णस्तु कर्णः स्वयं**

**तत्किं षण्डवदीहसे[2] प्रलपनैः प्राप्तुं[3] मृधे[4] जैत्रताम् ॥ 38 ॥**

**श्रीकृष्णः—** सखे धनञ्जय! सम्यग् व्याहरति कर्णः। वाक्कलहे[5] कालातिपात एव प्रयोजनम्।

**धनञ्जयः—** [साटोपं चापं विस्फार्य] भगवन्नप्रतिहतानुशासन!—

**सकृदपि नमयित्वा यन्महेन्द्रादि[6]वृन्दै[7]-**

**रवनिगतशिरो[8]भिस्साधयन्[9] सुप्रतिष्ठाम्।**

**तदपि सुरपसूनोर्मूर्ध्नि कृत्वा तावाज्ञां**

**विनमयति गुणाढ्यं[10] गाण्डिवं सूतपुत्रे ॥ 39 ॥**

---

1. ०बन्धुभिः, क।
2. ०प०, क, पाण्डव्यय०, ख।
3. ०प्तं, क।
4. धै, ख, ग।
5. ०हेन, ख।
6. ०रि०, क।
7. ०न्दान्य, क।
8. ०रांसि, क।
9. प्रापयन्, क।
10. ०ढ्यां, ख।

कर्णः— [सप्रश्रयं चापं विस्फारयन्नवलोकयंश्च[1]]

**अयि! विजयधनुस्त्वं भार्गवक्रोधवह्नौ**

**मुहुरवनि-महेन्द्रानाहुतीस्तानकार्षीः।**

**समयमिह गुणाख्यामाहुतिं[2] जुह्वदेकां**

**क्षिपसि किमु विलम्बं कर्णकोपाश्रयाशे? ॥ 40 ॥**

[इति परस्परं प्रजिहीर्षतः]

शल्यः— भगवन् श्रीकृष्ण! इह प्रचुरपललजम्बाल[3]कङ्कालबन्धुरायां[4] वसुन्धरायां स्यन्दन-निदेशनं निर्भरमावयोः परिश्रमं समधिकयिष्यति। तद्दूरवर्तिन्येव विमर्दसहा सर्वंसहा। यदभिरोचते श्रीमतेऽत्र भवते[5] श्रीमद्रपते। मन्मन-सैवामन्त्रितं[6] भवता। तदागच्छ तत्रैवानयोः समररहस्यं परिपूरयावः।

**[ इति निष्क्रान्तास्सर्वे ]**

**इतिश्री श्रीयुत् लक्ष्मणमाणिक्यदेवविरचिते**

**'विख्यातविजय' नाम नाटके**

**'द्वैरथारम्भो' नाम**

**चतुर्थोऽङ्कः ॥**

1. ०र्य, ख।
2. ०ख्या०, क।
3. ०लजन०, ख।
4. ०वर्धितायां, ख।
5. ०गवते, क।
6. ०व, ख, ग।

# पञ्चमोऽङ्कः

[ ततः प्रविशति दुःखमाविष्टः स्यन्दनस्थो राजा दुर्योधनस्तमनुनयन्नश्वत्थामा च ]

राजा— [क्षणं ध्यात्वा] अहो! किं वाच्या नियतिर्निरवग्रहा! यतः—

ये नित्यानुगता ममानुदिवसं मद्दत्तभिक्षाशनाः
किञ्चिद् व्यापकतां विधित्सव[1] इतोऽरण्ये मया प्रेषिताः।
मद्दोर्विक्रमणाद्विहस्तमनसो मत्सस्य दास्यङ्गताः
धिङ्मे कौरव-कुञ्जरत्वमधुना तैरेवमाक्रम्यते॥ 1॥

हावत्सदुःशासन! हा वत्सवृषसेन! युष्मन्निधनजन्यदैन्यविदीर्णस्य दुर्योधनहृदयस्य जीवतोर्भीमार्जुनयोः का नाम शान्ति? किञ्च—

लक्ष्मणो[2]परतौ[3] लब्धं यद् दुःखं मर्मभेदकृत्।
तत् क्षुण्णं तत् क्षणादेव निहतेनाभिमन्युना॥ 2॥

तत्तयोर्निधनेनैव शोकसागरपारं प्रयातुमौपयिकम्[4]। [इति चिन्तां नाटयति।]

अश्वत्थामा— महाराज! किमयमपरि[5]चिन्तनीय इव चिन्तावेशो भवन्तमभिभवति[6]? सम्पराय[7]प्राग्भावप्रलयसमय एव निर्णीता[8] हि नीतिमद्भिरेतावती[9] परिणतिः।

---

1. ०ध०, ख।
2. ०क्ष्म०, ख, ग।
3. ०तो, ग।
4. ०यत्न०, ग।
5. ०द्य, क।
6. ०न्ति, ग।
7. ०ग०, ग।
8. ०तो, ग।
9. दृशी, क, ख।

**राजा—** सखे गुरुपुत्र! प्रत्यक्षीकृतास्त्वया बहवः क्षौणिपालाः। श्रुताश्च सहस्रशः। को नाम शक्तित्रयसमधिकः शत्रून् [1]सीम्ना समभियोजयेत्? तथा हि—

[2]स्वेच्छामृत्युः स भीष्मो भृगुतिलक[3]रुषाश्छेदकृच्छस्त्रजालै-
राचार्यः [4]सर्वधन्वीश्वरगुरुरिषुभि[5]स्तन्तथैवामरोऽपि।
[6]कर्णो ज्ञातस्त्वयैव स्वयमनुजश[7]त-श्रीयुतः सार्वभौम-
स्तत्किं दृष्ट्वा द्विषत्सु [8]प्रलयपरिगतो हन्त दुर्योधनोऽस्तु॥ 3॥

**अश्वत्थामा—** महाराज! भवदीयवेतनभुजां न कोऽपि तावद[9]प्रधानाध्यवसायः, नियति-स्त्वनिर्वचनीया। तथा हि—

गाङ्गेयस्य गुरुरपि द्रुपजौ बीजे विपद्विस्तृतौ
सृष्टं [10]विश्वविलासि निष्फलमभून्नारायणास्त्रं मया।

---

1. सा०, क, ग।
2. इ०, क।
3. ०षां, क, ०षं, ख।
4. ०र्वे०, क।
5. ०स्त्व, ख, ग।
6. ०स्तवै०, क।
7. ०तः ख, ग।
8. ०ण०, ख, ग।
9. ०नोऽ०, ग।
10. ०शि, ख, ग।

कर्णस्यैकविघातिनी[1] विघटिता शक्तिस्त्वकिञ्चित्करे

धिग् दैवं कवलीकरोति कृतिनां यत्पौरुषं तादृशम्॥ 4॥

[नेपथ्ये उभयतो जयवादानन्तरं दुन्दुभिध्वनिः]

राजा— [सविस्ममयमाकर्ण्य] सखे गुरुपुत्र! गुरुतरविशेषसमरारम्भ इव[2] प्रतिभाति।

अश्वत्थामा— [किञ्चित्परिक्रम्य सोद्ग्रीवं समरमालोक्य] महाराज! उभयतो दौन्दुभिक-मार्दङ्गिक-मौरजिक-पाटहिक-पाणविक-झार्झरिक करतालिकादिभिर्युगपत्ताड्यमानेषु वाद्यभाण्डेषु खाड्गिक-चाक्रिक-पारश्वधिक-[3]पाट्टिशिक[4]भैन्दिपालिक-कौन्तिक[5]-तौमरिक-मौद्गरिक[6] शांक्तिक-याष्टिक-धानुष्क-दोष्कादिभिर्वीरपुरुषैः परपक्षाधिक्षेपि स्वपक्षविजयवादाशंसिभिर्नूतनतया नियोज्यत इव समरहोत्सवः।

अये! शुण्डतुण्डपरिस्पन्दपराक्रान्तौ परस्परमाभिमुख्येन् वर्त्तेते करिकाक्षाप्लवङ्गमौ? तन्मन्ये कर्णार्जुनयोः समुपपन्नं द्वैरथमवलोक्य तदीया अस्मदीयाश्च तावुभौ हर्षयन्तः समभिवर्त्तन्ते।

राजा— अश्वत्थामन्! अव्यभिचारी ह्ययमर्थः।

आशैशवं द्वन्द्वमभीप्सुरद्य कुतः सहेतात्मजता दृगन्ते[7]।

कर्णोऽर्जुनं हन्त पदाक्षिपन्तं[8] मृषेत्कथं कृष्णसमीरणाशः॥ 5॥

---

1. ०धायि०, क।
2. इति, ख।
3. 'ख' मातृकायां नास्ति।
4. 'ख' मातृकायां नास्ति।
5. 'ख' मातृकायां नास्ति।
6. 'ख' मातृकायां नास्ति।
7. ०शान्तं, ख।
8. ० धे र, ख।

[नेपथ्ये एकतः सम्भूय]

अयि विजय! दिवि त्वं पूर्वदेवान् प्रमथ्य
प्रकटितकुलकीर्त्तिर्दानवारीनपारीः।
कुरुनृपतिजयाशा-मूलमस्योत्तमाङ्गं
झटिति भुवि निपात्य प्रीणयास्मान् पुरस्थः[1] ॥ 6 ॥

**राजा—** [सामर्षम्] हताशानां यौधिष्ठिरपक्ष[2]माश्रितानामाशामोद[3]कैस्तर्पणम्।

[पुनर्नेपथ्ये तथैवान्यतः]

भो भो वैकर्त्तन[4]! प्राक् सुरपतिरहितोन्मूलनादस्य जिष्णो
[5]र्यन्मूर्द्धानं विचुम्ब्य प्रमदनिपतितैरम्बुभिर्लोचनानाम्।
शीतैः सान्द्रप्रवालैर्मुहुरुपचितवान्नन्दनोद्यानवृक्षां-
[6]स्तंसन्दिग्धप्रदग्धान् झटिति स कुरुतां शोकतप्तांशुभिस्तान्॥ 7 ॥

**राजा—** [श्रुत्वा सहर्षम्] अन्वर्थवाग्व्यापारैः प्रियसखं कर्णं हर्षयन्त्यस्मदीयाः।

**अश्वत्थामा—** नूनमद्यैव कर्णार्जुनयोर्द्वैरथारम्भः। अहह! आचार्य-भीष्मयोरन्ते रत्नद्वयमिदं भुवि। अत्राप्यन्यतरस्याद्य[7] पर्याप्तिः प्रतिपाद्यते[8]।

---

1. ०स्तात्, ख।
2. ०पाति०, ख।
3. केन, ख।
4. ०र्णन! क।
5. ०र्यं, क।
6. संच्छिन्धि०, ख।
7. ०द्ये, ग।
8. समपद्यत, ख।

[राजानं प्रति सविनयससम्भ्रमम्] महाराज! अपृष्टेनापि हितैषिणा समयात्यये सति स्वामी निवेदनीय इति नीतिविदां सम्मतम्। अतः किञ्चिद् विज्ञापयितुमुत्कण्ठितोऽस्मि।

**राजा—** अवहितोऽस्मि आज्ञापयतु।

**अश्वत्थामा—** महाराज! नाद्यापि किञ्चिदपकृष्टतया विशिष्टोऽसि। गुरुगाङ्गेयौ तावद् वयःपरिणतिपरिगतौ प्रार्थनीयेन प्रहरणपूतेन मृत्युना ब्रह्मलोकमधिष्ठितवन्तौ न शोचनीयतामर्हतः। इतरे सुतज्ञातिबान्धवास्तेषामपि बहवो व्यापादितास्त्वदीयैस्तदीयैरपि भवतः। किञ्च—

**अद्यापि कर्णार्जुनयोर्विमर्द्दे**
**कश्चिद् विशेषः प्रतिभाति नैव।**
**ऊर्ध्वं क्षणाद्यद् भविता तदैव**
**वैशिष्ट्यमित्याचर यद्विधेयम्॥ 8॥**

**राजा—** गुरुपुत्र! किं विधेयमत्र?

**अश्वत्थामा—** महाराज! पाण्डुदायादेभ्यः स्वदायं प्रदाय तानपि वशीकृत्य चिराय भूचक्रचक्र[1]वर्त्तितया वर्त्तस्व[2]।

**राजा—** [अश्वत्थामहस्तं गृहीत्वा] आचार्य[3]पुत्र! बन्धुजनानामुचितमुपदिष्टवानसि[4]। किन्तु मद्विज्ञा[5]पितमवधेहि। युद्धस्य[6] प्राक्काले[7] पितृमातृव[8]चनादि-

1. ०परि०, ग।
2. ०र्णय, क।
3. आर्य० क।
4. ०स्मि, ख।
5. ०न्निवेदि०, ग।
6. 'ख' मातृकायामधिकः पाठः।
7. 'ख' मातृकायामधिकः पाठः।
8. ०चरणा०, ग।

भिर्वृद्धज्ञातिभिर्बान्धवैर्बहुधा[1] प्रशमार्थमुपदिष्टमवधार्य[2] सूतसम्बन्धिसु-[3]
हृत्सोदरान् घातयित्वा साम्प्रतं स्वप्राणरक्षार्थं[4] सन्धिं[5] विधाय कथं तेषां
मुखमवलोकयिष्यामि? कथं वा पीतदु:शासनशोणितवृकोदरादिभिस्तै:
सूदित—सौभाद्रादीनामस्माद्दृशामेकत्राबस्थिति:[6] क्षेमङ्करी? भवतु किं बहुना
पल्लवितेनेति[7]। मम पुनर्नि:शङ्कनीयोऽयं सङ्कल्प:—

आचार्य-गङ्गासुत-सिन्धुराज-
दु:शासनश्रेष्ठसहोदराणाम्।
निहत्य शत्रून् कृतकृत्यताम्वा
गन्ताऽस्मि[8] तैराश्रितमास्पदम्वा ॥ 9 ॥

**अश्वत्थामा—** **[ नि:श्वस्य ]** अहह! युगपद् भवतान्वयं[9] भुञ्जानस्य[10] भागधेयस्य मन्दाग्निमात्रमपि न प्रतिपद्यते[11]। महाराज! मामाज्ञापय वृषसेनशून्यं कर्णस्य पृष्ठं परिपालयंश्चिरस्य सख्योचितञ्चरितमाचरामि[12]।

---

1. ०र्बन्धुर्ज्ञा०, क।
2. ०धी०, क।
3. ०म्बुद्धि०, क।
4. ०परिर०, क।
5. सिद्धिं, क, सम्बि०? ख।
6. एकत्र एव, क।
7. प्रलापि०, क।
8. ०तो९, ख।
9. स्व०, ख।
10. ०ञ्जमा०, ग।
11. ०पा०, क।
12. ०भ्यो०, क, ख।

राजा— [सानुमोदम्] गुरुपुत्र! इदमेवाधुना भवद्विधविधानम्।

अश्वत्थामा— अयमयं[1] गच्छामि। [इति निष्क्रान्तः]

राजा— सूत! अस्मदीयजयाशामूलं द्रढयिष्यन्तं दारयिष्यन्तं वा कर्णार्जुनयोर्द्वैरथं सावयवं समीक्षितुमाकुलोऽस्मि। तत्समीचीनस्थाने स्थापय मे रथम्।

सूतः— महाराज! सम्भूयोभयचमूचक्र-[2]चङ्क्रमणसमुच्छलितधूलिपटलपरिपूरित-निखिलनभस्थले[3] स्वहस्तावलोकनेऽपि विहस्ता दृष्टयः[4]। तत्कथं नेदिष्टम-धिष्ठितवतापि महाराजेन तादृक् तयोः सम्प्रहारः[5] समीक्षितव्यः?

राजा— भद्रमुक्तम्। [क्षणं विचिन्त्य] सूत! सञ्जयस्तावत् समाहूयताम्। तेन महामुनिप्रसादप्राप्तदिव्यदृष्टिना[6] सर्वं विशेषमालोक्य[7] मत्पुरस्तात् प्रस्तोतव्यम्।

सूतः— स तावत् कुत्र? कथं जानामि? कथं वा रथं परित्यज्यासमयेऽस्मिंस्तत्र गच्छामि[8]?

राजा— [सस्मितम्[ त्वमत्र स्थित्वा समाह्वय। स यत्र तत्र स्थितो वा[9] दिव्यदृष्टि-[10]र्ज्ञास्यति।

---

1. ०हं, ख, ग।
2. ०रथ०, ख।
3. ०स्थाने, क।
4. ०श:, ख।
5. प्रहारः, ख।
6. ०क् दृष्ट्या, ख।
7. समालोक्य, ग।
8. गमिष्यामि, ख।
9. 'ग' मातृकायां नास्ति।
10. ०क्, ख।

सूतः— [उच्चैः] सञ्जय, सञ्जय! सन्निहितावस्थितये महाराजस्त्वामाज्ञापयति।

[ प्रविश्य सत्वरः ]

सञ्जयः— [राजानमुपसृत्य प्रणम्य च] महाराज! एष ते प्रवयः[1] परिजनोद्[2]गारध्वनि-स्तत्किमाज्ञापयति महाराजः?

राजा— सञ्जय! सम्[3]प्रति कस्मिन् प्रदेशे भवानासीत्?

सञ्जय— महाराज! कर्णार्जुनसमागमसमी[4]क्षणसमागतगीर्वाणगणकलहकुतूहलाव-लोकनविनिविष्टेन मनसा तद्वृत्तान्तमनुयुञ्जानं शरशय्याशा[5]यिनं शान्तनवं प्रमाणीकु[6]र्वता तदन्तिकमेव क्षणमास्य[7]ते।

राजा— मयापि सविशेषं समरवृत्तान्तमवगन्तुं भवान् समाहूतः। तत्कथय, क[8]थय के के त्रिदिवौकसः समागताः? किं वा वदन्ति?

सञ्जयः— महाराज! सर्वं निवेदयिष्याम्यहमवधीयताम्।

[किञ्चिदू[9]द्धर्वमवलोक्य]

**एष श्रेष्ठः सुराणां सरसिजवसतिः शङ्करोऽयं वृषस्थः**

**शक्रोऽयं देवताभिर्दिवसपतिरयं माठराद्यैरमात्यैः।**

---

1. ०याः, क, ख।
2. ०गोवन्यानि, क ०गावलानि०ग।
3. साम्प्रतम्, ख, ग।
4. ०म्वी०, क।
5. ०शयानं, क, शययनानन्तरं, ग।
6. ०तस्त०, ख।
7. ०त, ग।
8. 'क' मातृकायां नास्ति।
9. ०न्नरीक्ष्य, ग।

**चन्द्रोऽयं तारकाभिः स्वगणपरिवृता अन्य एते दिगीशा-**

**स्सर्वे सन्त्यम्बरस्था भुवि रणमनयोर्वीरयोर्वीक्ष्य[1]माणाः ॥ 10 ॥**

एते[2]षु पुरुहूताद्याः कतिपये धनञ्जयजयाशंसिनः, आदित्याद्याः कतिपये वैकर्णन[3]विजयाशंसिनः, परस्परं महेश्वर-परमेष्ठिनौ मध्यस्थौ विधाय विप्र[4]लपन्ति। [अधस्ताद[5]वलोक्य] इतोऽपि—

**फणीन्द्रलोकात्फणिनोऽपि भोगा-**

**नुत्कीर्य द[6]ण्डाकृतिपूर्वदे[7]हाः।**

**विमर्द्द[8]भारादभितप्तभू[9]मे-**

**श्छत्रीभवन्तीव दिदृक्ष[10]वस्ते ॥ 11 ॥**

---

1. ०क्ष०, क।
2. एते, क।
3. कर्णस्य, ख, वैकर्त्तन, ग।
4. प्र०, क।
5. ०द् वि०, क।
6. ०ण्डप्र०, क।
7. ०हः, क।
8. ०ति० ग।
9. ०मौ०, [मै?] ग।
10. ०क्षुरास्ते, क।

राजा— अहो! महदाश्चर्यम्।

प्रसादः परमैश्वर्यं प्रसूते[1] सात्वसम्पदः[2]।
विश्वमुद्वीक्षसे यत्त्वं[3] चार्मणेनैव चक्षुवा॥ 12॥

तत्कथय कृतवैरौ महावीरौ किमारम्भावासाते?

सञ्जयः— महाराज! पश्य, पश्य—

उभौ विदितविक्रमौ विततकार्मुकौ वर्मिणौ[4]
जयस्तवनसंस्तुतौ[5] रुधिरचन्दनाभिप्लुतौ।
रथोत्तमसमास्थितौ रजतवर्णवाहान्वितौ[6]
नरप्रवरसारथी उभयसैन्यधन्वीश्वरौ॥ 13॥

अपि च—

सुवर्णमणिमालिनौ मुकुटचन्द्रिकामण्डितौ
स्फुरन्मकरकुण्डलौ नयनकोणशोणद्युती[7]।
स्वसैनिकमुखस्थितौ[8][9] मथितशत्रुसैन्यार्णवौ
परस्परवधैषिणौ स्फुरत इन्द्रवृत्ताविव॥ 14॥

---

1. ०सूयते, क, ०सृते, ख।
2. ०नु०, क।
3. इत्थं, क।
4. ध०, क।
5. ०न्त०, क।
6. ०न्नि०, ग।
7. ०श०, ग।
8. ०सु०, ख।
9. ०सु० ख।

[एते परस्परं तावुभौ हर्षयन्तः]

**भीमादयः परे हृष्टाः पृष्ठतः सव्यशाचिनः।**

**अश्वत्थामादयः सर्वे त्वदीयाः कर्णपृष्ठतः॥ 15॥**

**राजा—** ततस्ततः।

**सञ्जयः—** महाराज! साम्प्रतं परस्परशरनिकरनिपातनिरन्[1]ध्रे नभसि न- तावन्नयन-विषयतां प्रतिपद्यते तयोर्व्यापारप्रवाहः। तथा हि—

**च्छादितं प्रहरणैर्मिथस्तयोः**

**प्रावृडन्धतमसै[2]रिवाम्बरम्।**

**ज्योतिरिङ्गणगणैरिवार्चितं**

**तत्फलैः स्फुरति यन्त्रमा[3]र्जितैः॥ 16॥**

[ततः सातिशयो[4]ड्डामरशब्दविशेषश्रवणमभिनीय सर्वे कर्णं पिदधाति।]

**राजा—** सञ्जय! किमयं कर्णकुहरविपाटको विकटः श्रवणशब्दविशेषः?

**सूतः—** श्रवणकु[5]हरमवगाहमानो जीवनमाकर्षतीव महान् शब्दः।

**सञ्जयः—** महाराज! ता[6]भ्यां मिथःप्रयु[7]क्तमहास्त्राणां मध्ये नभोनिर्भरसंघ[8]ट्टसमुद्भूतेन

---

1. ०बद्धे, क।
2. ०मैरि०, क।
3. ०म०, क।
4. ०यतोमर० ख।
5. ०कूप०, ख।
6. उभाभ्यां, ख।
7. ०क्तानां, ख।
8. ०ह०, ग।

ध्वनिना सर्वे गीर्वाणा अपि पाणिभ्यां श्रवणे[1] पिधाय वर्त्तन्ते, किञ्च तादृगनिर्वचनीयमहास्त्राणाम्—

कुप्यन्महाकालविभज्यमान-

ब्रह्माण्डभाण्डध्वनिचण्डघोषैः।

क्रमेण पाणिद्वयरुद्धयुग्मा

स्यादष्टकर्णी व्यथिता विधातुः॥ 17॥

[अधस्तादवलोक्य] अहो! एतेऽपि—

सङ्ग्रामसम्वीक्षणसम्प्रहृष्टाः

प्रचण्डशब्दव्यथिताः फणीन्द्राः।

उन्मीलयन्त्याशु विलोचनानि

तथैव शश्वद्विनिमीलयन्ति॥ 18॥

राजा— अत्यद्भुतोऽयं महावीरयोः समरारम्भः। ततस्ततः।

सञ्जयः— महाराज! साम्प्रतमपि निर्विशेषेणैव[2] तौ वर्त्तेते वीरव्रतिनौ।

राजा— सञ्जय! निपुणमवधार्य विस्तारय वीरवर्य[3]योर्विशेष[4]समरवृत्तान्तम्।

सञ्जयः— [सहर्षमिव] महाराज! साम्प्रतमतिक्रान्तमर्यादेनाङ्गपतिना कतिभिर्निशितनिपातैर्विशिखैर्वासुदेवं विभिद्य तुरङ्गा अपि ताडयाञ्चक्रिरे।

---

1. कर्णौ, ख।
2. ०षोद्भ्रान्तौ, ख, ०शेषेण, ग।
3. ०वी०, क,
4. ०र्विषम०, ख।

राजा— सञ्जय! कथमियं भग्नभेरीभाङ्कृतिवद्[1] वैरस्यमुत्पादयन्ती[2] भीमहतकस्य स्वरवत्ता[3] श्रूयन्ते[4]?

सञ्जयः— महाराज! श्रूयताम्—

शौरैः संहननं विलोक्य रुधिरैस्तू[5]च्छीकृतश्या[6]मिकं

श्वेताश्वानपि पद्मरागरुचि[7]रान् कर्णेषु निःसारितैः।

भीमः प्रस्फुरदो[8]ष्ठमर्जुनमतः संक्रोधयन्[9]नूचिरां-

स्त्वं युद्धाद्विरमैनमस्मि गदया सञ्चूर्णयामि क्षणात्॥ 19॥

राजा— सञ्जय! तच्छ्रुत्वा किं व्यवसायेन प्रतिप[10]द्यते वीर[11] वीभत्सुना?

सञ्जयः— [सन्त्रासमिव निपुणं निरूप्य] महाराज! सम्प्रति हि—परिमुक्तमानवीय-

---

1. ०की०, क।
2. वैरमु०, क।
3. ०त्वा, ख, सुरवत्ता, ग।
4. ०न्तं, क।
5. ०स्त०, ग।
6. ०स्वा०, ख।
7. ०धि०, क।
8. ०ट०, ख।
9. ०नु० क।
10. ०पा०, ख।
11. 'र' मातृकायामधिकः पाठः।

प्रहरणप्रयोगयोरनयोर्दैवतास्त्रैरेव[1] भुवनकोषविनाशीसमुपजातः[2] समरारम्भः।

राजा— सञ्जय! अधुना[3] किमुपपद्यते? तत् प्रस्तूयताम्।

सञ्जयः— [साश्चर्यमिव निरूपयन्] राजन्नवधेहि—

ज्वालाभिर्लेलिहानं गगनमगणितस्फूर्जदुग्रस्फुलिङ्गं[4]

निर्मुक्तं फाल्गुनेन त्रिभुवनजनता भीममाग्नेयमस्त्रम्।

कल्पान्तोत्क्रान्ततान्तप्रबलघनकणोद्गीर्णसग्रावववारा[5][6][7][8]

सम्पत्तेस्सम्भा[9] रभाजामसकृतशमितं वारुणेनाङ्गराजः॥ 20॥

राजा— ततस्ततः।

सञ्जयः— महाराज! पश्य, पश्य—

विजयो वायवीयेन विफलीकृत्य वारुणम्।

परिवर्त्तयतीवैतामाहवीयवसुन्धराम्॥ 21॥

राजा— [ससम्भ्रमम्] ततस्ततः।

---

1. ०गो र०, क।
2. ०रिव, ख।
3. तच्छ्रुत्वा किं व्यवसायेन प्रतिपद्यते। क।
4. ०ण०, ग।
5. ०भा०, ख।
6. ०म्वनग०, क।
7. गणोद्गी० क, ग।
8. ०सग्रावा, क, [संग्राममारात्?]
9. सम्पत्ते सम्भावभाजा समङ्कृतसमितं, क। सम्पत्यां भार, ख।

**सञ्जयः—** साधु, साधु। माहेन्द्रेण[1] मारुतिमवरोध्य[2]-

**तामिस्त्रं[3] त्रिभुवनदृक् क्रियाकपाटं[4]**
**कर्णेन प्रधनविशारदेन मुक्तम्[5]।**
**उद्दूप्यद्दिनकरमण्डलप्रकाशं**
**वीभत्सोरपनमित[6]रथञ्चकार॥ 22॥**

**राजा—** [सहर्षम्] कथय, कथय। कीदृगुपपद्यते?

**सञ्जयः—** महाराज! भानवीयेन[7] भीमानुजन्मा तामिस्त्रं तिरस्कृत्य स्वप्रकाशं प्रकटयंस्तपतीव त्रिभुवनम्।

**राजा—** [ससम्भ्रमम्] ततस्ततः?

**सञ्जयः—** महाराज! तदस्त्रमपि—

**निरस्यन्नाहवीयेन कर्णेनाहवशोभिना[8]।**
**पुष्पवन्ताविव[9] च्छन्नौ चक्रातेऽर्जुनचक्रिणौ॥ 23॥**

---

1. महीध्रेण, क। महीघ्रेण, ग।
2. ०रु०, ख, ग।
3. त० ग।
4. ०वा०, क।
5. ०प्रमु०, ख।
6. ०लपितं, ख, ०लपित०,ग।
7. ०नैव, ग।
8. ०वह०, क।
9. ०द०, क।

अहो! तदपि वैधुन्तुदं[1] वैष्णवेनापराद्धं[2] विधाय किरणजालं[3] विक्षिपन् किरणमालीव स्वप्रकाशं[4] प्रकटयति किरीटमाली?

राजा— [सकौतुकम्] सञ्जय! यद्यपि[5] दिव्यास्त्रज्वालाजालजम्बालगहने गगन-वर्त्मनि अदिव्यदृशामस्मादृशां[6] दृष्टयः सञ्चरणे विदधति वैधूर्यं तथापि त्वत्तादृग्[7]वचनविस्तार[8]कौशलेन सर्वं सविशेषं चाक्षुषीभवदिवानुभूयते।

सञ्जयः— महाराज! विगतनिमेषकै[9]र्वृन्दारकैरपि विलोकनात्तृप्तैः परस्परं किम्भूतं किं भवतीति प्रश्न[10]ाकुलैः प्रतिप[11]ाद्यते। अपि च—

**अनयोर्द्वन्द्वयुद्धस्य[12] सर्वाङ्गीण[13]विलोचनैः।**
**दिदृक्षा कौतुकी शक्रश्चक्रवत्परिवर्त्तते॥ 24॥**

---

1. ०ध०, क।
2. ०स्त्रं, क।
3. ०णं क्षि०, क।
4. सु०, क।
5. ०द०, क।
6. ०स्माकं, क।
7. त०, ख।
8. ०रेण, ख।
9. ०षैकै०, क।
10. ०श्रा०?, ख।
11. ०प०, ख, ग।
12. ०द्धे च, ख।
13. ०णो, ख।

राजा— [सस्मितम्] सत्यमेतादृगेवायं समरारम्भस्तददीयैस्तदीयै[1] र्वा प्रहरण-पाणिभि:[2] किं प्रतिपाद्यते[3]?

सञ्जय:— महाराज! शस्त्रसम्पातयोगां जगतीं परित्यज्य स्थितानामपि तेषां कश्चिदेवोन्मिषितुमुत्सहते?

राजा— ततस्तत:? प्रकृतं प्रस्तूयताम्।

सञ्जय:— महाराज! किं ब्रवीमि? समासादिदमावेदयामि—

न तच्छस्त्रं न सा शिक्षा न तत् पुरुषपाटवम्।
न तत् कोदण्डपाण्डित्यं यदाभ्यां न प्रकाश्यते[4]॥ 25॥

राजा— महाराज! महावीरयोर्विमर्द्दमसहमाना मेदिनी मज्जतीव मन्यते। तथा हि—

कठिनकमठपृष्ठं विस्तृतं स्यादधस्तात्
क्षितिरुपरि[5] विमर्द्दक्षोभिता[6] दुर्वहाभूत्।
अगमदुभययन्त्रग्रावकल्पातिपीडो[7]
विगलितविषसार: कल्पतां कुण्डलीश:॥ 26॥

राजा— [प्रभाहतिकृतं[8] किमपि सचमत्कारं चक्षुर्मुद्रणमासाद्य[9] पुनरुद्घाट्य[10] च समम्भ्रमम्] सञ्जय! सञ्जय!

---

1. ०र्वा, ख।
2. ०लि०, क।
3. ०प०, ग।
4. ०श०, ग।
5. ०व्यपति०, क।
6. ०तत्? ख।
7. ०डं, क,
8. ०हत: ख।
9. ०द्राणा०, ग।
10. तदु०, ख।

घण्टाचक्रप्रसर्पद्ध्वनिमुखरनभः[1] किङ्किणीक्वाणपूर्णं

[2] हा हेति ध्वानमुच्चैर्जनयदनुपदं सर्वतः खेचराणाम्

शस्त्रज्वालाजटालं द्युतिमणिकरमपि[3] क्षिप्रमाकल्प्य तुच्छं

प्रादुर्भूतं किमेतत्स्फुरदमितमहाज्योतिरुज्जृम्भिताशम्॥ 27 ॥

**सञ्जयः—** [ससम्भ्रमानुमोदम्] महाराज! सव्यशाचिशरसंघैः ससारथिं सकेतुं स्यन्दनं पिहितमवलोक्य क्रोधातिशय[4]-संज्वालितेन वैकर्णनेन[5] सुचिरमर्चितं चन्दनचूर्णपरिपूर्णतूणीरशयानं भोगीन्द्रमहास्त्रं धनुषि योजितम्। तत्प्रभा-पटलपरिपूर्णमन्तरिक्षं समभिवीक्ष्यते।

**राजा—** [सहर्षसम्भ्रमातिशयम्] अनेनैव महास्त्रेण धनञ्जयं हनिष्यामीति नित्यमहमाश्वासितः[6] प्रियसुहृदा। तन्न वेद्मि मदीयविजयाशावीरुधः[7] कीदृशीं फलनिष्पत्तिं समाधास्यते शस्त्रवरेण्यम्।

**[ नेपथ्ये महान् कलकलः ]**

**राजा—** सर्वे सावधानाः शृणुमस्तावद् भूचरखेचरपातालचरैः सर्वैः सम्भूय किमाक्रुश्यते? [सर्वे तथा कुर्वन्ति।]

**[ पुर्नेपथ्ये सम्भूय ]**

---

1. ०रित०, क।
2. हा हा हे०, ग।
3. 'क' 'ख' 'ग' मातृकासु अधिकः पाठः।
4. यं, ग।
5. ०र्त्त०, ग।
6. ०तोऽहं, ख।
7. ०यजयाशा०, क।

तृप्तः सन्तानपुष्पे[1]ष्वमरपतिरभूद्यत्समाघ्राय कृष्यन्[2]
यत्पृष्ट्वा स्वस्तिवाचं स्वयमकृत[3]हरः सम्प्रहारः[4] प्रहृष्टः।
नागास्त्रे[5]णाङ्गराजस्तद्[6]विजयधनुः प्रेरितेन प्रयत्नाद्
वीभत्सोरुत्तमाङ्गं तर्हि रणमुखे निष्किरीटञ्च[7]कार॥ 28॥

राजा— [सहसोत्फुल्य] फलितमनोरथोऽस्मि [इति हर्षातिरे[8]कं नाटयति।]

[पुनर्नेपथ्ये] 'निष्किरीटञ्चकार'।

राजा— [सविषादम्] आः[9]! किरीटमेव कृत्तं न तु शीर्षम्?

सञ्जयः— महाराज! शीर्षमेव छिन्नमासीत्। किन्तु भगवानरविन्दनाभः पदद्वन्द्वेनाक्रम्य स्यन्दनमन्तर्हस्तैकप्रमाणायां वसुन्ध[10]रायामवीवि[11]शत्। तेनैव ग्रीवार्थमभिसन्धीयमानं मह[12]स्त्रं मुकुटम[13]कार्षीत्।

---

1. ०ष्पैरम०, ख।
2. हृष्यन्, क।
3. ०हृ०, ख।
4. शस्त्रहारप्र०, क।
5. ०गेन्द्रे, क।
6. ०व०, ग।
7. ०रीटिञ्च०, ख।
8. ०शयं, क।
9. हा! क, ग।
10. 'क' मातृकायां नास्ति।
11. ०मविशत्, क।
12. 'क' मातृकायां नास्ति।
13. मुकुटमहाषीत् क, किरीटमेवाकार्षीत,ख, मुकुटमहार्षीत्, ग।

राजा— [सामर्षखेदम्][1] अहह! दुर्योधनमहाद्रुममूलोच्छेदनतक्षास एव समुद्भूतः[2]।

सञ्जयः— महाराज! अतः पुराप्रामाणिकै 'र्यतः कृष्णस्ततो जय' इति पुनः पुनरावेदितं महाराजस्य।

राजा— [सावज्ञम्] सञ्जय[3]! एतदपि मसृणमतीनामेव विकल्पितम्। यदि तदायत्तावेव जयपराजयौ, तत्कथं स्वीयस्वश्रियो[4] न रक्षितः। तत्कथय किरीटकर्त्तनानन्तरं कीदृक् समभिवर्त्तते?

सञ्जयः— महाराज! मुकुटपतनान्मस्तकपतनाशङ्किनामस्मदीयानां सिंहनादसंहता[5]-तोद्य-शङ्ख[6]शब्दैस्तथैवाशङ्किनः[7] पाण्डवकाण्डपृष्ठास्तु—

चित्रार्पिताः कतिबभूवुरूपेत[8]शस्त्राः
केचित्किमेवमिति वाङ्मुखरायिताशाः।
केचिद् दृगम्बुकलुषीकृतवक्त्रविम्बाः
केचित् प्रमुग्ध[9]मनसः शिविरं प्रयाताः॥ 29॥

---

1. सखेदामर्षम्, ख।
2. सम्भूतः, क।
3. 'क' मातृकायां नास्ति।
4. ०स्वश्री० क, ०स्वस्त्री०, ख।
5. महा०, ख।
6. संघ, ख।
7. ०त०, ख।
8. ०र०, ग।
9. ०सन्न०, ग।

एतेषां संशये किमाश्चर्यम्?

शिरःपतनशङ्कित[1]त्रिदिव[2]नाथदृङ्मण्डली
स्खलत्सलिलमिश्रितोच्छलितजन्यरेणूत्करैः।
वलद्बहल[3]कर्दमे गहन[4]वर्त्मनिस्यन्दना-
भवन्त्यसुरविद्विषां विगतचारुचक्रक्रियाः॥ 30॥

राजा— [सनिर्वेदम्] सखे कर्ण! यथोचित[5]साप्तपदीन् सम्पादनेनोच्चता-मधिगतवानेव[6] भवान। किन्तु—

दुर्योधनस्य धिग्दैवमन्यथाशामयद्रुमः।
अन्यथा फलनिष्पत्तिर्येन शस्वत्समर्थ्यते॥ 31॥

सञ्जय! तत्कथय, कथय किमारम्भो[7]ऽयमधुना धनञ्जयः?

सञ्जयः— किरीटकर्त्तनात्क्रोधव्रीडातिशयव्यथितेन मनसा सत्त्वरमनुत्तरमेवोत्तरीयेण[8] वाससा मस्तकवेष्टनं विधाय गाण्डीवज्यां परिमृज्य समरारम्भातिशयं

---

1. ०तु, क।
2. ०दश०, क।
3. ०हु०, ख।
4. गगन, ख।
5. यथेष्ट०, क।
6. ०वान् भवानेव, ख।
7. ०म्भोऽधुना, ख।
8. ०रोत्त०, ग।

सम्प्रहारञ्चक्रे[1]। श्रीकृष्णोऽपि स्यन्दनं समुद्धृत्य[2] वेगातिशयेन योजयाञ्चकार[3]।

राजा— सञ्जय[4]! सम्प्रति प्रियसुहृदा कर्णेन किमध्यवसायेन भूयते?

सञ्जयः— महाराज! एतत्सर्वमवलोक्य[5] प्रहसन्नवादीदङ्गराजः[6][7]—अरे रे धनञ्जय!

**सत्यं सारथिनानेन समर्थस्त्वं जगज्जये।**

**तक्षकेनापि दष्टस्य यः स्याज्जाङ्गुलिस्तव[8] ॥ 32 ॥**

राजा— [निःश्वस्य] ततस्ततः?

सञ्जयः— ततः केनचित्कुण्डलिना समेत्य सव्यशाचिशिरश्छेदनाय पुनरहं सन्धीयतामित्यभिहितेन कर्णेन '**कस्त्वमिति**' पृष्टेन तेन ममायं मातृनिधनकारी धनञ्जयस्त्वद्[9]बाणान्तर्वर्त्तिना तं हन्तुं प्रवृत्तेन मया श्रीकृष्णकौशलेन ग्रीवामनधिगम्य मुकुटमहारि साम्प्रतं बाणान्तर्वर्तिना सुविहितनैपुण्येन भवता पुनः प्रेषितेन[10] मया—

---

1. प्रादुश्चक्रे, क।
2. ०भृ०, ग।
3. ०क्रे।
4. 'ख' मातृकायामधिकः पाठः।
5. ०मालो०, ख, ग।
6. प्रसन्नमासी०, ख,
7. ०नाथः, ग।
8. ०ङ्ग०, ग।
9. ०त्फलानुव०, ख।
10. ०रि०, ख।

अपि[1] सर्वे सुराधीश-प्रधाना[2]स्त्रिदिवौकसः।

त्रातारः सन्ति चेदस्य[3] हार्यन्तदपि मस्तकम्॥ 33॥

इत्यभिहितेन कर्णेन विहस्य—

शतमपि विजयान् यदि प्रहर्त्तुं

प्रभुरसि[4] मे तदपि त्वया[5] न कार्यम्।

विजयमपि पराजयं प्रतीहि[6]

स्वयमसतः परपौरुषाश्रितस्य॥ 34॥

इत्यभिधाय प्रत्यादिष्टः स्वयमेवार्जुनमुज्झासयितु[7]मुज्जिहानः श्रीकृष्ण-[8]कृतोपदेशेन तेनैव त्रिभिः पत्रिभिस्त्रिधा विच्छिन्नो बिलेशयः प्राणान्[9] जहासीत्।

राजा— अयमपि दुर्योधनभागधेयस्य परीपाकः ततस्ततः?

सञ्जयः— ततस्तयोर्महावीरयोः परस्परं[10] निर्भरसंरम्भानुरूपं सारथिभ्यामपि स्यन्दन-

---

1. यदि, ख।
2. ०ध०, क।
3. वे०, ग।
4. ०भव०, क।
5. दुर्योधनेन०, ग।
6. ०ति हि, क।
7. ०ज्जासयि, क, ज्झापयि, ख।
8. ०ष्णोपदे०, ख।
9. ०नहासीत्, क।
10. ०र०, ख, ग।

परिस्पन्दनवैचित्र्यं[1] व्यातन्यते। यादृशानि तनुते[2] मधुहन्ता-मण्डलानि विजयस्य रथस्य, तादृशानि किल मद्रमहीशः स्यन्दनस्य वितनोति वृषस्य? अहो! मिथः शरनिकरनिपातनिष्प्रयोजनता निष्पाद्यते[3]!

राजा— साधु मद्रेश! साधु। अतः केशवकल्पस्त्वं सारथ्ये समर्थितः प्रियसुहृदा।

सञ्जयः— [समुद्ग्रीवः ससम्भ्रमम्] आः! किमेतत्?

राजा— किं किम्?

सञ्जयः— [निपुणं निरूप्य हस्तौ विधुन्वन्]

धिग् दैवम्—

भ्रष्टव्यापारकेतुर्युगपदपगतः[4] क्षुद्रघण्टास्वनश्री-

निंष्पन्दस्यन्दनोऽयं समजनि जगती ग्रस्तनिःशेषचक्रः।

शल्यः श्रान्तौऽपि शश्वत्त्वरयति तुरगान् शृङ्खलाबद्धकल्पान्[5]

कर्णः क्रोधारुणाक्षः किमिति कथमिति व्याहरन् व्या-कुलोऽभूत॥ 35॥

राजा— [सविषादम्] सञ्जय! किमुच्यते[6] भवता?

सञ्जयः— महाराज! तस्य रथचक्रचक्रवालं मग्नमभून्मेदिन्याम्।

राजा— [सोद्वेगम्] सञ्जय! कथं नोच्यते दुर्योधनस्य मनोरथचक्रचक्रवालम्[7]?

---

1. ०न्दवै०, ग।
2. तन्यते, क।
3. ०ष्पा०, ख, ग।
4. ०त०, ख, ग।
5. ०मेख०, ख।
6. 'क' 'ख' मातृकयोर्नास्ति।
7. ०चक्रवालम्, ख, ०चक्रम्, ग।

सञ्जयः— शान्तं शान्तम्। अस्थिरतायाः नायं समयः।

राजा— सञ्जय! साम्प्रतं किं प्रतिपद्यते[1] किं वा विचेष्टते प्रियसखः?

सञ्जयः— महाराज! बहुधा व्यापारेणापि रथचक्रवालसमुद्धर्त्तुमशक्तः[2] सन्नमानुष्यातिशयमनुभवन् सनिर्वेदमित्याह[3] वैकर्णनः[4] —

छिन्नं मदीयविशिखेन रथं ग्रसित्वा
पार्थस्य शीर्षमकरोद् भवती विरूढम्।
कष्टं तनोति मम देवि रथं ग्रसन्ती
धात्री त्वमेव जगतां तव नैष धर्मः॥ 36॥

राजा— अहह! मन्दभाग्यस्य दुर्योधनस्य पक्षपातिनस्ते[5] सर्वंसहापि रथभारमसहमानाऽभवत्।[6] सूत! भूमिस्थस्तावदहं भवामि ममैव रथं प्रापय प्रिसखम्।

सञ्जयः— महाराज! मनोरथस्यापि प्रवेशस्तत्रमहार्घतामर्हति[7] किं पुना रथान्तरस्य?

राजा— सञ्जय! कथय तादेतावति च्छिद्रे[8] कृष्णार्जुनाभ्यां[9] किं व्यवस्यते?

---

1. ०पा०, क।
2. ०क्राणि, क।
3. ०माह, ख।
4. ०र्त्त०, ख, ग।
5. ०स्तत्,
6. ०सहा नाभवत्, ग।
7. ०र्घ्य० ख, ग।
8. द्वित्रे, ख।
9. कर्णा० ख।

सञ्जयः— महाराज! चक्रमज्जनं कर्णस्य विशेषवैकल्यञ्चाकलय्य कथमेतदिति पार्थेन पृष्टः प्रत्यवादीत् पुण्डरीकाक्षः —

ब्रह्मशापमवधिं गमयन्त्या

ग्रस्तमद्य[1] धरया रथचक्रम्।

वामदण्डमपि[2] सर्वमहास्त्रं

नष्टमस्य मनसि प्रतिभाति॥ 37॥

तदस्य प्रत्यासन्नोऽयञ्चरमसमयः। इत्याकर्ण्य नूनमस्मिन्नेतावदवस्थे[3] प्रहरणाद्धर्मलोपापत्तिरित्यभिधाय शिथिलीचक्रे कोदण्डं किरीटमाली।

राजा— साधु साधु। सञ्जय! साधु। धनुर्धरधुरन्धरतया श्लाघनीयत्वं भवत एव न्याय्यम्। ततस्ततः?

सञ्जयः— महाराजः! ततः सङ्कलितकोदण्डकाण्डं पाण्डवमवलोक्य[4] पुण्डरीकाक्षः सक्रोधमित्याह—

यद्भीमाय विषाक्तमन्नमददद्दुर्योधनः[5] सानुजो[6]

लाक्षावेश्मददाह यद्यदहरद्द्यूतेन तादृक् श्रियम्

कापट्येन तवात्मजं यदवधीद्धर्मस्तदा कीदृशः

कारुण्येन किमाततायिनमहो क्षन्तुं भवान्नर्हति?॥ 38॥

---

1. ०स्य, क।
2. वामदत्त०, ख, रामदत्त०, ग।
3. ०न्नेव एतद०, क।
4. ०मा०, क।
5. ०दा० ग।
6. ०स्वा० ग।

तच्छ्रुत्वा तरङ्गितकोपकलापः फाल्गुनः पुनरपि कोदण्डं[1] मण्डलीकृत्य महास्त्रैरम्बरतलं सम्वृतमातनोति[2]।

राजा— [सक्रोधाधिक्षेपम्][3] अरे सोमकुलजरात्मज[4]! कथमस्मासु भवानी-दृगध्यवसायः[5]?

आवृत्तस्तव[6] फाल्गुनोऽप्यहमपि त्वत्पुत्रपत्नीपिता
तस्मिन् साप्तपदीपनमस्ति भवतो भ्रातुस्तवाहं प्रियः।
दौरात्म्यं त्वयि मे न सूक्ष्ममपि धिग् गोपान्नवैगुण्यतः
कृष्णात्वं[7] न हि[8] केवलं तव बहिर्यत्क्रौर्यमेतादृशम्[9]॥ 39॥

सञ्जय! कथमिह कर्णेन क्रियते?

सञ्जयः— महाराज! साम्प्रतं परशु-पट्टिश-मुषल-मुद्गर-चक्र-चन्द्रहासादिभिः क्षेपनीयायुधैर्व्यवधत्ते श्वेताश्वीयशताङ्गमङ्गराजः। किञ्च—

यद्यदङ्गपति रस्यति शस्त्रं
केवलभुजबलादभिदृप्तः[10]।

---

1. ०ण्डमण्डलीं, ख।
2. ०म्भृ०, ख।
3. ०धाक्षे०, ग।
4. ०जनराधरात्मज, ख, जरामानुज, ग।
5. गृध्यवसायः, क।
6. ०वु०, क।
7. तव, ख, ग।
8. न हिं, ख, ग।
9. ०शः, ख।
10. ०भितृप्तः, क, ०तिदृप्तः, ख, ०पि दृप्तः, ग।

तत्तदाशु विशिखैर्मन्त्रपूतै-

स्संच्छिनत्ति शतधा कपिकेतुः ॥ 40 ॥

[ नेपथ्ये सम्भूय ]

दीप्तं[1] चिरस्यासनपद्मनालं

नृपश्रियः कौरवानायकस्य।

अर्द्धेन्दुना हन्त! सुरेन्द्रसूनुः

करीन्द्रकक्षाध्वजमुन्ममाथ ॥ 41 ॥

राजा— [श्रुत्वा अनुत्तरं चित्रलिखित[2] इव स्थितः]

सञ्जयः— महाराज! करिकक्षाकेतुकर्त्तनकन्दलितकोपातिशयस्फुरिताधरपल्लवेन[3]—

कर्णेन सत्त्वसन्दोह-निर्भेदन[4]विनिष्ठुरा।

दंष्ट्रेव ज्वलिता मृत्योर्जग्राह[5] शक्तिरुत्तमा ॥ 42 ॥

राजा— [अनुत्तरमेव हस्तसंज्ञया पृच्छति।]

सञ्जयः— [सप्रश्रयमिव] महाराज! अङ्गनृप[6]भुजबलप्रेरितया बाह्वन्तर्निर्भिन्नः[7] सन्—

स्वानीकं व्यथयन् प्रतीपपृतनामानन्दयन् नन्दना-

धीशं व्याकुलयन् वृषं प्रमदयंश्चक्रायुधं व्यग्रयन्।

---

1. ०प्तिं, क।
2. ०लिख इव, क।
3. ०वितेन, ख।
4. ०दवि०, ग।
5. ०गृहे, ख, ग।
6. ०राज०, ख, ०भूप०, ग।
7. ०न्तरे नि०, ख, ग।

**मूर्द्धानं नमयन् वपुः शिथिलयन्नेत्रे परावर्त्तयन्**

**केतुं केवलमाश्रयन् समभवन्मूर्च्छावृतः फाल्गुनः ॥ 42 ॥**

**राजा—** [स्वगतम्] अहो! जयाशास्माकं पुनर्द्विपत्रायिता। [प्रकाशमम्] ततस्ततः?

**सञ्जयः—** महाराज! लब्धावसरस्ते[1] चमूनाथश्चक्रं समुद्धर्त्तुं[2] स्यन्दनादवतीर्य भुजद्वन्द्वं व्यापारयति।

**राजा—** साधु प्रियसख! समयज्ञोऽसि। तत्कथय कथय सम्प्रति कीदृगवस्थो वीभत्सुर्वासुदेवेन वा किं व्यवस्यते?

**सञ्जयः—** महाराज! तदवस्थं भीमानुजन्मानमालोक्य बाहुभ्यां परिरभ्य भ्रातर्भ्रात-र्निरातकवचहिरण्यपुर-पुरन्दरपुरहरसङ्गरमङ्गलश्रिया समाश्रितस्त्वमिह कथमीदृक् प्रमुग्धोऽसीत्यभिधाय शान्तयित्वा प्रत्यवादीदरविन्दनाभः[3] —'**अस्मिन्नेवावसरे व्यापादयैनम्। पुनरपि[4] रथस्थोऽयमधृष्यो[5] भविष्यति[6]।**' ततस्तद्वचनं प्रमाणयन् पृथात्मजः सत्वरं तूणीरादञ्जलिं समुद्धृत्य समभिमन्त्र्य च धनुषि योजयाञ्चकार[7]।

**राजा—** [सखेदामर्षसम्भ्रमम्] अहह! आभीरपृष्ठ[8]दुष्टोपदेशे[9]नैतदवधार्य धर्म-

---

1. ०न्ते, ख।
2. ०द्धरन्, ख।
3. पुनरवा, ख, ग।
4. पुना, क।
5. ०धिष्ठो, क।
6. भवति, ख।
7. ०याम्बभूव, ग।
8. ०पुष्ट०, ख, ग।
9. ०शादवधार्य, ख।

धनञ्जयेनापि परिमुक्तः[1] कौरवकुलोचिताचारः।

**सञ्जयः—** [स्वगतम्] आशैशवाद्भवतैवाभिरक्षितः[2]।

**[ नेपथ्ये कलकलः ]**

[सर्वे ससम्भ्रममाकर्णयन्ति] [पुनर्नेपथ्ये सर्वे[3] सम्भूय]

**जम्भस्येवाशनिः[4] प्राक् त्रिदिवनृपतिना मन्त्रपूतःप्रयत्ना-**

**च्छ्वेताश्वेनापि सृष्टस्त्रिभुवनभयकृद्गाण्डिवज्याप्रमुक्तः[5]।**

**क्षौणीभर्त्तुः कुरूणां विजयविटपिनो मूलमस्योत्तमाङ्गं**

**कर्णस्य[6] स्कन्धदेशात्समुकुटमचिरादञ्जलिः सञ्जहार॥ 44।**

**राजा—** [श्रुत्वा] हा कर्ण! हा प्रियसख। [इत्युक्त्वा मोहमुपागतः]

**सञ्जयः सारथिश्च—** महाराज! समाश्वसिहि। [इति चामरतालवृन्ताभ्यां वीजयतः]

**राजा—** [किञ्चित्समाश्वस्य[7]] सञ्जय! किमिदमुक्तं किमिदमाकर्णितम्?

**सञ्जयः—** महाराज! निर्णीता हि परिणतिरेतावती[8]। तदेतस्मिन्[9] समये किमयमध्य-

---

1. ०यु०, क।
2. ०वं भवतैव रक्षितः, ख।
3. सर्वतः, ग।
4. ०स्यै०, ख।
5. ०भि०, ग।
6. ०स्या०, क।
7. ०श्वा०, ख।
8. ०दृशी, ग।
9. ०देव०, ख।

वसायः वीरपुरुषोचितोचिताचारमाचरितुमर्हति[1] महाराज[2]:?

राजा— हा कर्ण! हा अङ्गराज! हा जगदेकवीर[3]! मत्कृते तवायं परीणामः?

सञ्जयः— महाराज! कर्णस्तावदणीयसीमपि न खलु शोचनीयतामुपगतः[4]। तथा हि—

जीवतोऽस्य परितो रणाङ्गणे
भिन्नमुच्छ्रितममित्र[5]मण्डलम्[6]।
साम्प्रतं निपतितस्य तादृशं
मित्रमण्डलमभेदि तेजसा ॥ 45 ॥

अपि च—

आजन्म यस्य समुपार्जितकीर्त्तिपुञ्जं[7]
संस्तूयमान[8]मधुना विधिरुद्रवक्त्वैः।
अत्युच्छ्रितं[9] नवतया पुनरुज्जिहीते
कर्णस्त्वया कुरुनरेन्द्र[10]! न शोचनीयः ॥ 46 ॥

---

1. कौरवकुलो ख।
2. 'ग' मातृकायामधिकः पाठः।
3. ०दै०, क।
4. ०पा०, ग।
5. ०सूत्रित०, क।
6. ०लः, क।
7. ०जातं, ग।
8. सम्भू०, ख, ग।
9. ०श्रियं, क।
10. खलु, ख।

सम्प्रति पाण्डवयोधजयसिंहनाददुन्दुभिध्वनिभिरवधूयमानां ध्वजिनीं स्वकीयां समाश्वास्य[1] गुरुपुत्रादिभिः[2] सम्मन्त्र्य च यदनुष्ठेयं तदनुष्ठीयताम्।

राजा— [दीर्घं निःश्वस्य] सञ्जय! किमयमत्र मन्त्रणावसरः?

सख्युर्भ्रातेति दुःशासनशोकमसहमानः कर्णस्तावज्जीवननिरपेक्षतया[3] तमहार्षीत्[4]। कर्णशोकाभिहतस्य मे जीवनरक्षणे नरेन्द्रसुखे[5] वा नृशंसतासम्पादको हि यत्नः[6]। पश्य—

रिपुभिरभिहतो रणाङ्गणेऽस्मिन् ग्लपयति शोकमयं सुयोधनस्य।
हतरिपुथवा वसन्नटव्यां विगतनरेन्द्रसुखस्तथा[7] तपोभिः ॥ 47 ॥

[ पुनर्नेपथ्ये ]

क्ष्वेडाभिर्भौमिकाभिः श्रुतिकुहरपुटीपाटलीभिर्निरस्त्राः
शस्त्रज्योतिस्तडिद्भिः[8] कृतकलुषदृशः कालकेयान्तकेन।
दैत्यास्तादृगम्भोधरसदृशमभिप्रेत्य कर्णे गतेऽस्तं
कल्पान्तं कल्पयन्तो दिशि दिशि कुरवः कान्दिशीका द्रवन्ति ॥ 48 ॥

---

1. ०श्व०, क।
2. ०स्समं, ख।
3. भयात्, ग।
4. महानासीत, ख, ग।
5. ०मु०, ख।
6. ०तः, ख।
7. ०सुखस्तपोभिः, ग।
8. ०स्त्राष्टाभि०, ख।

राजा— [सक्रोधम्] आः कथं मयि जीवति कुरवः कान्दिशीका द्रवन्ति?

सूत! सैन्धवानभिसन्ध्य[1] सन्देशय स्यन्दनमानन्दयामि स्वकीयमनीकम्[2]।

[सूतस्तथा[3] कृत्वा प्रापयति रथम्]

सञ्जयः— [जनान्तिकम्] जितकाशिनौ कृष्णाऽर्जुनावित एव परापतत[4] इव[5] लक्ष्यते।

तदहमपि स्थानान्तरं[6] गच्छामि। [इत निष्क्रान्ताः सर्वे]

इतिश्री श्रीयुत् लक्ष्मणमाणिक्यदेवविरचिते

'विख्यातविजयं' नाम नाटके

'कर्णवधो' नाम

पञ्चमोऽङ्कः

---

1. ०नन्द्य, ख, ग।
2. सैनिकम्, ख।
3. प्रस्थापयति, ख,ग।
4. ०ति०, क।
5. इति, ख, ग।
6. ०रे, क।

## षष्ठोऽङ्कः

[ततः प्रविशतो रणरुधिरविराजितविग्रहौ[1] श्रीकृष्ण-धनञ्जयौ]

श्रीकृष्णः— [धनञ्जययं निर्वर्ण्य सबहुमानम्]

दिष्ट्या ह्यस्त्रं[2] समजनि बहिर्भूषणैर्भूषितार्थं[3]

दिष्ट्या[4] कर्णः समिति-शयने दीर्घनिद्रां प्रपेदे।

दिष्ट्या राज्ञः सपदि भविता प्रेषितो[5] दीर्घमन्यु-

र्दिष्ट्या भ्रातस्त्वमसि[6] विजय! श्रीपतिस्त्वं प्रयातः ॥ 1 ॥

धनञ्जयः— भगवन्! भवसागरपारपरिप्रापणपरमवैज्ञानिकेन प्रभविष्णुना सम्प्रहार-पारावारपारं प्रापितोऽस्मीति किं विचित्रम्? किञ्च—

एतदेव मम शक्तिमहत्त्वं

यज्जगत्प्रभुरभून्मम गोप्ता।

यद्यदीदृगपरं कृतिमत्वं

त्वत्प्रसादविभवस्तदशेषम् ॥ 2 ॥

श्रीकृष्णः— [सस्मितम्] सखे! पश्य, पश्य—

---

1. कर्ण०, क।
2. दिष्टं, ख।
3. ०णे०, क, ०णा०, ग।
4. दृष्ट्वा, ख।
5. ०ता, ग।
6. ०पि, ख।

त्वत्पक्षीयधनुर्धरायुधघटा-वर्षप्रणष्टाश्रया
भीमोद्दीप्तसमीरणप्रहरणप्रक्रान्तभङ्गाकुला[1]।
तत्तादृक्[2] समरार्णवेऽतिगहने दौर्योधनीयं चमू-
श्शीर्णा नौरिव[3] वम्भ्रमीति भवता निष्कर्णधाराकृता ॥ 3 ॥

अपिच–

क्ष्वेडाक्षुब्धा हि तेन भ्रमितगुरुगदाक्षुण्णकुम्भस्त्रवद्भिः
कुम्भीन्द्राणामसृग्भिः समजनि भवतः पूर्वजेनाष्टमाब्धिः[4]
श्वेतच्छत्राणि हंसाः फलकसमुदयः[5] कूर्मचक्रं गजानां
वृन्दं[6] स्यादन्तरीयं नरतुगघटा यत्र यादः समूहः ॥ 4 ॥

अपरञ्च–

दृष्ट्वा नकुलमायान्तं शरदंष्ट्रातिदारुणम्।
क्षुद्रसर्पा इव त्रस्ता द्रवन्ति कुरुशस्त्रिणः ॥ 5 ॥

तत्परतोऽपि पश्य–

साध्वसावर्त्तितग्रीवं पक्षव्यापृतिवञ्चितम्।
श्येनवत्सहदेवोऽयं शकुनिं समुपाद्रवत् ॥ 6 ॥

---

1. ०सरण, ख, ग।
2. अत्रैव 'ख' मातृका समाप्ता।
3. ०ह, ग।
4. ०मो०, ग।
5. ०यं, क।
6. ०पं, क।

[किञ्चित्परिक्रम्य] अहो! धृष्टद्युम्न-शिखण्डि-सात्यकिद्रौपदेयादि[1]-भिरायुधैरवधूयमाना[2] कुरुध्वजिनी ध्वान्तधर्षितदृष्टिरिव पालयितुमध्वानमपि न प्रतिपद्यते। अहह! दारुणशस्त्रज्वालाकवलितहृदयाः पिपासवः स्वगात्रगलितरुधिरैः कतिपये तृष्णां[3] समुच्छेत्तुमीहन्ते। सखे! लोहविकार-भयं किं न भावयति[4]? पश्य, पश्य–

पुत्रान् भ्रातृन् पितृनेते वहन्तः शरपीडितान्।
तानेव फलकीकृत्य कुर्वते शस्त्रवारणम्॥ 7॥

**धनञ्जयः–** [किञ्चित्परिक्रम्य] भगवन्! अयमयं हा कर्ण! हा कर्णेति ब्रुवाणः कृपाश्वत्थामादिभिरनुनीयमाणश्छत्रेणैवानुमीयमानः दुर्योधन[5] इव[6] प्रतिभाति।

**श्रीकृष्णः–** सम्यगुपलक्षितम्। स एव दुरात्मा भग्नसङ्कल्पः। तथा ह्यस्य–

स्वीयश्रियो गृहमिव द्रुतनिर्गतायाः
कर्णस्य शून्यमवलोकयतः शताङ्गम्।
चित्तं द्रवीभवदिवाशु सुयोधनस्य
वाष्पच्छलात्स्खलति सम्प्रति दृक्प्रणाल्या॥ 8॥

**धनञ्जयः–** भगवन्! नानुचितमेतत्। आत्मविनाशादपि कष्टदो भवति मित्रविनाशः। तथा हि–

---

1. 'ग' मातृकायामधिकः पाठः।
2. ०भू०, ग।
3. कृष्णं, क।
4. ०न्ति, क।
5. सुयो०, ग।
6. ०ति, ग।

आत्मनो निधनमाप्तजन्मनां

नापि शोच्यमविशिष्टमप्यदः।

मित्रनाशजनितं प्रसूतिजं

कस्यचित्कलुषिणोऽपि[1] जायते॥ 9॥

**श्रीकृष्णः–** सखे! सत्यमेतत्। पश्य, पश्य–

अस्तमहीधरसविधं गतवति मित्रे[2] धरित्रीयम्।

दीर्घच्छायाच्छलतो[3] विस्तारयति स्वहृदयमालिन्यम्।

**धनञ्जयः–** सम्यगभिहितं भवता। किञ्च–

अधुना तादृशमस्त्रं[4] न प्राप्तस्यापि शूरस्य।

स्खलति प्रतापपटिमा दिशि दिशि दुर्योधनस्येव॥ 10॥

**श्रीकृष्णः–** [सानुमोदं पश्चिमां दिशं[5] प्रति समवलोकयन्] अये!

विभिन्नमेतत्किल कर्णतेजसा

विनिःसरच्छोणितशोणमण्डलम्।

समन्ततःक्षालयितुं तमोपहः

किमम्बुधौ मज्जनमीहतेतराम्॥ 11॥

---

1. ०णो द्विजायते, ग।
2. ने०,? क।
3. ०छ०,क।
4. ०स्तं, ग।
5. दिशमवलो०,ग।

सखे धनञ्जय! तव प्रतिज्ञालतोत्पन्नाया:[1] फलवत्ताया: धर्मराजसन्तोषावधि: परिपक्वता[2]। तथाहि–

अन्यादृशैर्दुरवगाहपरिश्रमेण
तत्तादृशं प्रमदकारि विधाय कर्म।
स्मेराननस्य नृपतेरवलोकनेन
धन्यो हि भूषयति पौरुषमात्मनीनम्॥ 12॥

अपि च–

यदनीष्टमुदीक्ष्य निष्ठुरं
कथमेतत्स्खलतीति विस्मितम्[3]।
सुखयत्यवधूय तं[4] प्रभुं
ध्रुवमुच्चैः कृतिनां धुरन्धरः॥ 13॥

सखे! अन्यदपि किञ्चिन्मनसि वर्त्तते?

**धनञ्जयः**– भगवन्! किन्तत्?

**श्रीकृष्णः**– सखे! भवतः किरीटकर्त्तनानन्तरमन्यथाशङ्किनः[5] कतिपये क्षुद्राः पत्तयः शिविरसाम्मुख्येन[6] प्रयाताः तन्न वेद्मि। [ किमप्यभिलप्य ] कीदृग्

1. ०न्नयो:, ग।
2. ०पाकता, क, ख।
3. ०स्मय०, क।
4. तत्, ग।
5. ०वर्त्तनान्त० क।
6. ०ख्ये, क।

व्यामोहयति महाराजम्? तत्सर्वतोभावेनावयोस्तत्राविलम्बितमेव प्रयाणं[1] श्रेयः। अवहारश्च[2] सम्प्रहारस्यापि[3] सम्वृत्तः तद् भीमादिभिरेव ध्वजिनीम्परि[4]-पालयद्भिः पश्चात् समैष्यते[5]।

धनञ्जयः— औपयिकमाज्ञाप्तं भगवता[6]। तथैवास्तु भवत्प्रसादाज्झटित्येव।

स्फुरदधरपुटं विपाटलाक्षं
वदनमपश्यमहं[7] यदीश्वरस्य।
स्मितकिरणविराजितं प्रसन्नं
तदमृतदीधितिवद्विलोकयिष्ये[8]॥ 14॥

श्रीकृष्णः— [रथं सम्परावर्त्य[9]] सखे! पश्य, पश्य—

कालेन पश्चिमशिलोच्चयमूर्द्धि सद्य-
श्छिन्नस्य वासरमहामहिषस्य रक्तैः।
पूर्णीकृतं[10] कनकपात्रमिवार्कविम्बं
प्रीत्यै वितीर्णमधुना रजनीचरेभ्यः॥ 15॥

[इत्युभौ रथवेगेन निष्क्रान्तौ]

---

1. ०मा०, क।
2. ०रः, ग। [अवहारः = ग्राहः, क।]
3. ०रः स्यापि? ग।
4. ०नीं पाल०, ग।
5. ०मेष्यति, क।
6. भवता, क।
7. ०श्यं य्र; क।
8. ०यानि, ग।
9. ०परावृत्य, क।
10. ०प०, क।

[ **विष्कम्भकः** ] [ततः प्रविशति कञ्चुकी]

**कञ्चुकी**– [परिक्रम्यावलोक्य च] अये! समरवृत्तान्तमवगन्तुं महाराजसमादिष्टेन[1] मया विलम्बोऽपि सम्भावितः, कश्चिद् वृत्तान्तोऽपि नाधिगतः? सम्प्रति हि–

**साद्धं तामरसोत्करैर्वितनुते मुद्रां रथाङ्गावलिः**
**साद्धं दिक्प्रमदाभिरस्यति नभः शोभां प्रकाशात्मिकाम्।**
**साद्धं स्यादभिसारिकाभिरभितो हर्षान्वितस्तस्करः[2]**
**साद्धं लोकविलोकनप्रसरणैरन्तर्दधे[3] भास्करः॥ 16॥**

कः कोऽत्र भोः!

**प्रतीहारः**– [प्रविश्य] अहमस्मि।[4] किमाज्ञापयति[5] मामार्यः?

**कञ्चुकी**– भद्र! जानासि कश्चित्समरादिहागतो वर्त्तते?

**प्रतीहारः**– आर्य! न कश्चित्तादृशो यः पुनरार्यपुरस्तान्निवेदनीयः[6]।

**कञ्चुकी**– भद्र! अपि नाम केनचित् समायातम्?

**प्रतीहारः**[7]– आर्य! द्वौ तावद्भीतभीताविव पाञ्चालपदातिकावुन्मत्तवद्व्याहरन्तौ मया निर्जने स्थापितौ।

---

1. ०प्रेरिते॒न, क।
2. ०न्नि०, ग।
3. ०ह०, क, ख।
4. ०मत्रा०, ग।
5. ०त्यार्यः, ग।
6. ०र्यस्य, क।
7. ०री, ग।

कञ्चुकी— भद्र! इहानीयेतां तौ। वार्त्तामवधारयामि।

प्रतीहारः[1]— यथादिशति आर्यः। [इति निष्क्रान्तः।]

कञ्चुकी— [साशङ्कमिव] कुशलिनी चेद् भवति वार्त्ता, तत्कथं निर्जने स्थापितौ तौ?

[ततः प्रविशति पत्तिद्वयमादाय प्रतीहारः।]

प्रतीहारः— आर्य! एतौ तौ[2] पाञ्चालपुरुषौ।

कञ्चुकी— कुतः समायातौ भवन्तौ?

एकः— [ससाध्वसम्] अज्ज! समत्थलदो[3]।

छाया [आर्य! समरस्थलतः।]

कञ्चुकी— कीदृशी वार्त्ता जायते?

[अपरः किञ्चिद्वक्तुमुद्यतः, परेण दृक्संज्ञया निवारितः।]

कञ्चुकी— [प्रतिहारं प्रति] भद्र! द्वारभूमौ तिष्ठतु भवान् यथा[4] नान्यः कश्चित् प्रविशति।

प्रतीहारः— यथादिशत्यार्यः [इति निष्क्रान्तः]

कञ्चुकी— अये पाञ्चालपुरुषौ! सविधभागच्छतम्। किञ्चिद् भयं नास्ति। कीदृग्वृत्तान्तोऽभिज्ञायते? याथातथ्येनाभिधीयताम्।

एकः— अज्ज! कण्णाजुणाणं संयुअे[5] समअम्मिण[6] कोवि णिअडवट्टीभविदुं[7] ज्जेव

---

1. ०री, ग।
2. तौ, 'ख' मातृकायां नास्ति।
3. समरत्थ० क, ख।
4. यथान्यः, क, ख।
5. ०अ, क।
6. समस्मिन्, क।
7. उ, ग।

प्पहरदिदम्, दूरदोवि दूरदरं ज्जेव अम्मेट्ठिदाअ।

छाया–(आर्य! कर्णार्जुनयोः संयुगे ससम्भ्रमेण कोऽपि निकटवर्ती भवितुं एव प्रसरति, दूरतोऽपि दूरतरं इव मेऽक्षिदाहः।)

कञ्चुकी– ततस्ततः।

पुरुषः– तदो धनञ्जअस्स रधादो ज्जा दिव्व किम्पि पडिपादितं तदो कोवि कोलाहलो आसी।

छाया–(ततः धनञ्जयस्य रथात् यद् दिव्यं किमपि प्रतिपादितं तदा कोऽपि कोलाहलः आसीत्।

कञ्चुकी– [सातङ्कम्] ततस्ततः।

पुरुषः– तं आअणिअ को वा कुत्थ गदोत्ति ण जाणीअदि। अम्मे उणतिण्णा उलद[1] एत्थ आआदाअ।

छाया–(तं आकर्ण्य को वा कुत्र गतः इति न ज्ञायते। अहं उण्णत्वेन उद्वेल्य अत्र आगतः।

कञ्चुकी– कोलाहलस्तावत्कीदृशः श्रुतः?

पुरुषः– न किञ्चिद् वदति।

अपरः– अज्ज! सम्पहरणसमए[2] कक्खु किं ण सुणीयदि? तं कधं अज्जस्स पुरदो कधेमि?

छाया–(आर्य! सम्प्रहरण-समये कस्य किं खलु श्रूयते? तं कथं आर्यस्य पुरतः कथयामि?

कञ्चुकी– श्रुतविषयविवरणान्नापराद्धौ युवाम्। तत्कथय कीदृशं श्रुतम्?

[इति मुहुर्मुहुः पृष्ठौ तौ कर्णान्तिकं किञ्चित्कथयतः।]

---

1. ०तु, क।
2. सम्पहार

कञ्चुकी– हा धिक्। [इति नासार्पितैकाङ्गुलिः क्षणं तूष्णीं स्थितः।]

द्वौ– भो प्रतीहार! इत एव आगच्छ।

प्रतीहारः– (प्रविश्य किमाज्ञापयत्यार्यः?

कञ्चुकी– इमौ द्वौ तावत्[1] क्षणं निर्जने रक्षितव्यौ।

प्रतीहारः– आर्य! अनयोराकारेणैव सर्वे हि[2] मुमूर्षव इव वर्तन्ते।

कञ्चुकी– भद्र! यावत्कश्चित्समीचीनः[3] समायाति तावत्कस्यचित् प्रवेशो नानुपरोध्यः।

प्रतीहारः– यथाज्ञापयत्यार्यः। [इत्युभौ समादाय निष्क्रान्तः।]

कञ्चुकी– [सखेदम्] अहह! किन्तावच्छ्रुतम्? किं वा व्याहरिष्यामि[4] पुरतः पार्थिवस्य? प्रभुना पृष्टस्य वितथकथनेनापि प्रत्यवायः। धिगस्तु मे चिरजीवितम्। [आत्मानं निर्वर्णयन् सखेदामर्षम्]

**भ्रष्टाः द्विजाः सपदि यत्र पुरे पतिष्णौ**

**लुप्ता श्रुतिर्बलिभिराक्रमणं वितेने।**

**नष्टा रतिस्तिमिरसङ्कुलितप्रचारः[5]**

**क्षेत्रे[6] च तत्र वसतिः[7] क्षणमप्ययोग्याः[8] ।। 17 ।।**

---

1. 'ख' मातृकायामधिकः पाठः।
2. बहि, ग।
3. समीचीनः कश्चित् ग।
4. व्यव०, ग।
5. ०वति, ग।
6. ०त्रज्ञ०, ग।
7. ०तिं, क।
8. ०द्य, ग।

अथवा पलायनपरायण-पशोर्व्याहृतेन[1] कथमसम्भवसम्भावनाभिरात्मानं व्यामोहयामि? तथा हि–

**यन्ता यस्मिन् श्रीहरिश्चक्रपाणि-**
**र्योद्धा यस्मिन् गाम्डिवी सव्यशाची।**
**भद्राशंसुर्यत्र धर्म्मक्षितीशः**
**संख्ये तस्मिन्नीदृशः किं विकल्पः?॥ 18॥**

तदहमपि नृपतिनिकटवर्ती भवामि। कदाचित्कश्चित् समायातः किञ्चिन्निवेदयति वा?

[इति परिक्रम्यावलोक्य च] अये! कुसुमारामसरस्तीरमणिमण्डपे कृत-सन्ध्यावन्दनो महाराजस्तावद्देव्या पार्श्ववत्या सह किमपि विस्रम्भमालापयति[2]। तन्मया सविधवर्त्तिना स्थातव्यम्। यद्यादिशति तदा पुरस्ताद् भवितव्यम् [इत्येकान्ते स्थितः]

[ततः प्रविशति आसनस्थो[3] धर्मराजः मञ्जुभाषिण्या सख्यानुगता द्रौपदी च।]

राजा– प्रिये! पश्य, पश्य–

**विन्यस्तमस्ताचलमूर्ध्निबीजं**
**दिवाकराख्यं किल तत्प्रसूताः।**
**सन्ध्यालतेयं प्रतिभाति यस्याः**
**पुष्पाणि राजन्त्यभितः प्रदीपाः॥ 19॥**

---

1. ०कृ० ग।
2. ०लपति, ग।
3. यथानिर्दिष्टसेनस्थो, क।

द्रौपदी– महाराअ! चक्कवाईं चक्कआरुण-विलोअणाहं[1] एदाए पल्लवाईं प्फुरन्ति।

छाया–(महाराज! चक्रवाकी चक्रारुणं विलोकनार्थं एतस्मिन् पल्ल्वले स्फुरति।)

राजा– प्रिये! साधूक्तम्। पुरस्तादवधीयताम् :–

सुश्लिष्टमैक्यं गतमेव चक्र-

युग्मं जरासन्धवपुर्यथैतत्।

भीमेन सायन्तिमिरेणं तूर्णं

कृतं द्विधा निष्क्रियतां[2] प्रपेदे ॥ 20 ॥

द्रौपदी– [सखेदम्] महाराअ! समुप्पण्णविरहावत्थां अणुहरन्ती विस्सत्थाङ्गा णिच्चलावाङ्गी[3] होदि रथाङ्गी व्धाङ्गा[4]।

छाया– (महाराज! समुपपन्नविरहावस्थामनुहरन्ती विश्लथाङ्गा निश्च-लाङ्गी भवति रथाङ्गाऽर्द्धाङ्गी।]?

राजा– प्रिये! दारुणं[5] दुस्सहन्तावद्विरहवैश्वानरार्चिः। पश्य, पश्य–

प्रभाकरे मज्जति सिन्धुमध्ये

निशैकवेणी परिभूतकान्तिः।

तमिस्त्रसंज्ञं मलिनैकवस्त्रं

धत्ते किल द्यौर्विरहप्रदग्धा ॥ 21 ॥

---

1. ०आणं, ग।
2. ०ष्प्रि, ख।
3. निश्चलप्राङ्गा, क।
4. ब्धाङ्गा? क।
5. ०ण०, क।

अहो[1]! सन्ध्यामतिक्रम्य रजनिरप्यजनि, अधुनापि कश्चित्समरवृत्तान्तो नाधिगतः कः कोऽत्र भोः।

**कञ्चुकी–** अधुना किं करोमि। राज्ञा सन्दिष्टः[2] किं वा कथयामि?

[इति प्रविक्रम्य दूरे स्थित्वा] देव! बटुकोऽयमिहास्ति।

**राजा–** अये प्रियम्वद! समागम्यतामुपकण्ठम्।

**कञ्चुकी–** [तथा कृत्वा सविनयं स्थितः]

**राजा–** प्रियम्वद! चिरप्रेरितेन[3] त्वया प्रवृत्तिरायोधनी काचित्समधिगता?

**कञ्चुकी–** महाराज! न तादृशी काचित्।

**राजा–** कश्चिदपि समरक्षेत्रान्न समायातः?

**कञ्चुकी–** न कश्चित्तादृशः।

**राजा–** [सामर्षमिव] प्रियम्वद! विशिष्टभावेनैव भवता सर्वभमिधीयते। तत्कथय यादृशस्तादृशोऽपि वा कश्चित्समायातः?

**कञ्चुकी–** युद्धक्षेत्रात्पलायमानोऽपि पुरुषः[4] पुरस्तान्महाराजस्य किं व्याहरणीयः?

**राजा–** राजा [सातङ्कमिव] कञ्चुकि! न कश्चित्तादृशोऽपि[5] समायात?

**कञ्चुकी–** [स्वगत्म] कतिवारान् राज्ञः पुरस्तादन्यथा व्याहरामि।

[प्रकाशम्] महाराज! द्वौ तावत् पाञ्चालपदातिकौ प्रहरणपीडा-विसंस्थुलहृदयौ पानीयपानार्थिनौ स्वालयमागतवन्तौ।

**राजा–** तत्रत्यवृत्तान्तस्ताभ्यां कीदृशो व्याहृतः?

---

1. अहह, ग।
2. समादिष्टः, क।
3. प्रेषितेन भवता, ग।
4. पलायमानपुरुषोऽपि, क।
5. तादृशः कश्चित्, क।

कञ्चुकी– व्याहरणे तयोः किं सामर्थ्यमस्ति।

राजा– किमलीकमुच्यते? किञ्चिदपि न व्याहृतम्?

कञ्चुकी– व्यवस्थितञ्चेद व्याहृतम्, तन्महाराजस्य पुरस्तान्निवेदयामि[1]?

राजा– हे प्रियम्वद! व्यवस्थितमव्यवस्थितम्वा यत्ताभ्यामभिहितं तद्याथातथ्येन निवेदय।

कञ्चुकी– महाराज! ताभ्यामिदमुक्तम् :–

**''कर्णार्जुनयोर्महति विमर्द्दे[2] वर्द्धमानमतिशयदारुणकोलाहलमाकर्ण्य वयं विद्रुताः।''**

राजा– [सखेदम्] तव विसंस्थुलाक्षरलपितेनानुमीयते कुशालिनी वार्ता मे वत्सस्य। अहह! :–

**चक्रव्यूहे[3] योजयित्वा[4]ऽभिमन्युं**
**न व्रीडाद्द्यं शीर्षमूर्द्ध्वं नयामि।**
**क्रूरोऽद्या[5]हं वाक्प्रतोदैः प्र[6]नुन्नं**
**कृ[7]त्वा जिष्णुं प्रादिशं द्वन्द्वयुद्धे॥ 22॥**

यदि जातु तस्य किमपि वैगुण्यमुपजायते, तदिहामुत्र ममावस्थान-मतिमात्रविडम्बनायै[8]व।

---

1. व्याहरामि, क।
2. 'ख' मातृकायामधिकः पाठः
3. ०हं, ख।
4. देश, क।
5. ध्यां, क।
6. प, ख।
7. ह० क।
8. नयैव, ख।

**कञ्चुकी–** किमलीकव्यामोहेनात्मानं[1] खेदयसि?

**द्रौपदी–** [ससम्भ्रमानुनयम्] महाराअ! ण क्खु तारिसो जोहो धनञ्जअस्स ईरिसं सम्भावीयदि। महाराएण विशेपदो तस्स महा अवट्टदि वासुदेओ।

छाया–(महाराज! न खलु तादृशः योधः धनञ्जयस्य ईदृशं संभाव्यते महाराजेन, विशेषतः तस्य महान् वर्तते वासुदेवः।

**कञ्चुकी–** [स्वगतम्] अये![2] मम मनसि यद् वर्त्तते तद् देव्यैव समादिष्टम्!

तथा हि–[**'यन्ता यस्मिन्नित्यादि'** पुनः पठति।]

**राजा–** देवि! देवयजनसम्भवे न कश्चिद् वाक्-प्रबन्धः प्रविशति मे हृदयम्। अये[3] प्रियम्वद! यदि कश्चिद् विशेषः श्रुतो भवता, तदा प्रस्तूयताम्। यावद् दुर्योधनवशीभूतो न भवामि, तावदात्मानं संवृणोमि।

**द्रौपदी–** [सास्रम्] अये[4] प्रियम्वद! सव्वं कधेहि।

छाया–(अरे प्रियम्वद! सर्वं कथय।

**कञ्चुकी–** देवि द्रुपदनन्दिनि! भवत्यपि वितथसम्भावनया व्यामोहयति महाराजम्?

**राजा–** [सातिशयाभिनिवेशम्]–

**शरदमृतमयूखवक्त्रविम्बं**
**कुटिलशिरोरुहमम्बुजायतताक्षम्।**
**अभिनवजलदच्छविं युवानं**
**विजयमयं किमहं विलोकयिष्ये?॥ 23 ॥**

---

1. व्यामोहनेना० क।
2. 'ग' मातृकायामधिकः पाठः।
3. ०रे, ख।
4. 'ख' मातृकायां नास्ति।

**कञ्चुकी–** महाराज! हताऽमित्रमधुनैव, तमत्र विलोकयिष्यसि।

**राजा–** [सावज्ञम्] **दीर्घायुरस्तु राधेयः कृतार्थोऽस्तु सुयोधनः।**

**विजयं[1] यदि पश्यामि स एव विजयो मम॥ 24॥**

[नेपथ्ये कलकलः। सर्वे ससम्भ्रममाकर्णयन्ति।]

**[पुनर्नेपथ्ये सम्भूयोच्चैः] :–**

**त्रिजगदघविघातैः पाञ्चजन्यप्रमुक्तै-**

**र्ध्वनिभिरभिवृताशै[2]र्दत्तहस्तावलम्बः।**

**श्रवणपुटकपूर्त्तौ सान्द्रपीयूषवृन्दं**

**स्पृशति गगनमुच्चैर्देव[3]दत्तप्रणादः॥ 25॥**

**राजा–** [सहसोपसृत्य **'स्पृशतीति'** श्लोकपादं पठित्वा]

प्रियम्वद सत्वरं गत्वा प्रियवृत्तान्तमवधार्य सत्वरमागच्छ।

**प्रियम्वदः–** [स्वगतम्] जीवितस्माभिर्जीवितम् [इति सत्वरं निष्क्रान्तः]

**राजा–** प्रिये पाञ्चालि!

**निदाघनिष्पीडितशाखिमूले**

**धारेव नव्याम्बुदजीवनस्य[4]।**

---

1. "विजय-पदं अर्जुनस्य हेतवेऽत्र प्रयुक्तम्। महाभारतयुद्धे विख्यातवीरस्य कर्णस्योपरि विख्यातवीरस्य अर्जुनस्य विजयोऽत्र वर्णितः, तस्माद् विख्यातविजयाख्यं नाटकमन्वर्थाभिधानम्।"

2. ०नौ, क।

3. अर्जुनस्य शङ्खाभिधानं 'देवदत्त' इति।

4. ०ध, क।

एतादृशी[1] संशयविक्लवस्य[2]

मम श्रुतौ वाङ्मधुरा प्रविष्टा ॥ 26 ॥

**कञ्चुकी–** [पुनः प्रविश्य सत्वरः] जयति जयति महाराजः। हताऽमित्रौ माधव-धनञ्जयौ बहिर्द्वारोपकण्ठमलङ्कुर्वाणौ महाराजदर्शनोत्कण्ठिनौ स्यन्दनादवरोहतः।

**राजा–** [गृहाद् बहिरागत्य प्रियम्वद! भवता स्वयमालोकितौ तौ?

**कञ्चुकी–** अन्यथा कथमीदृङ्निवेदयामि महाराजस्य?

**राजा–** [सहर्षातिशयं स्वहस्तादवतार्य रत्नमयकटकद्वयम्, द्रौपदी च हर्षं नाटयन्ती कण्ठादवतार्य रत्नमालां कञ्चुकिने ददाति]

**कञ्चुकी–** [ससम्भ्रमं गृहीत्वा शुभाशीर्वादं विधाय यथास्थानं प्रस्थितः[3]।]

**राजा–** प्रियम्वद! क्षणमपि विलम्बो न विधेयः। झटिति गीतवादित्रादि-मङ्गलपुरस्सरं सत्वर प्रवेशय मत्प्राणप्रतिमौ तौ वीरप्रवरौ।

**कञ्चुकी–** यथादिशति देवः। [इति निष्क्रान्तः।]

**द्रौपदी–** हज्जे मञ्जुभाषिणि। तुअम्पि[4] आन्तउरङ्ग[5] दुअ सव्वाहिं बहिं एहिं[6] अस्साहिं णावीहिं हिम्पि मम मङ्गलअं आचरीय दुत्ति भणिअ झत्तिपि मज्जणसामग्गीमुवणेहि[7]। मज्जअं आणवेदु भट्टिणीति।

---

1. ०वती, क।
2. ०प्ल, क।
3. पर्यधासीत्, ग।
4. तुमम्पि, ग।
5. अन्ते, ग।
6. वहिं अस्वाहिं, क।
7. मंजुण, ग।

छाया–(हला मञ्जुभाषिणि। त्वमपि अन्तःपुरं द्रुतं सर्वाभिः बहिः अस्माभिः नारीभिः अपि मम माङ्गलिकं आचर्य्य दूतीं भण, झटिति मज्जणसामग्रीं उपनय। मज्जनं आज्ञापयति भट्टिनि इति।

मञ्जुभाषिणी– यं आणवेदि भट्टिणी।

छाया (यत् आज्ञापयति भट्टिनी। [इति निष्क्रान्ता।]

राजा– [पुरोऽवलोक्य सहर्षम्] देवि द्रुपदराजनन्दिनि! पश्य, पश्य :–

**प्राच्यांतमिस्त्रमुदपादि कपोतवर्णं**[1]

**चञ्चच्चकोरवनिता विवृणोति शश्वत्।**

**प्रत्याशमुच्छ्वसित्-कैरवकाननं त-**

**न्मन्ये महीध्रमुदयं विधुरारुरोह॥ 27॥**

[सानुमोदम्] अये! नयनमोदशुभगं भावुकभानुर्भगवाननुमानविषयता-मतिक्रामति कलानाथः। तथाहि–

**देवि! त्वत्स्मितचारुकोमलरुचस्तूर्णं विहाय स्पृशः,**

**शीतांशोः किरणाः किरन्ति जगतां पीयूषवर्षं दृशोः**

**एते यत्किरयन्ति किन्तु तमसस्तस्याश्रयो वर्त्तते,**

**हन्त! प्रोषितभर्तृका-कमलिनी कोकप्रिया हृत्पुटम्॥ 28॥**

द्रौपदी– महाराअ! सअलगुणाहारस्स कलाउलणिएदणस्स विमूहाकरस्स एदेहिं दोषहिं ज्जेव दोषाअरतुणम्।

छाया–(महाराज! सकलगुणाधारस्य कलाकुलनिवेदनस्य विमुग्धाकारस्य एभिः दोषैः एव दोषाकरत्वम्।)

राजा– [सस्मितम्] अये! अयमयम्–

---

1. ०च्यं, क।

ध्वान्तचक्ररजनीचरान्तकः

सन्ततं हृदयलग्नलक्षणः।

आतनोति कुमुदावलिं प्रिये

रामचन्द्र इव चन्द्रमण्डलः ॥ 29 ॥

[ततः प्रविशतो माङ्गलिकविधिना विभ्राजमानौ कञ्चुकिना दृष्टवर्त्मानौ श्रीकृष्ण-धनञ्जयौ।]

श्रीकृष्णः– [सहर्षम्] सखे सव्यशाचिन्! महाराजसन्दर्शनोत्कण्ठितस्य[1] भवतः पैत्रीदिगपि दध्यनुलिप्तकलसं कलानाथं विधाय तत्किरणजालोत्करैर्धरणि-मण्डलमवकीर्य मङ्गलमाचरति। तत् समीचीनः समयोऽसौ नरेन्द्रसन्दर्शनाय सम्प्राप्तः।

[कञ्चुकिनं प्रति] प्रियम्वद! महाराजस्तावत् कुत्र कीदृशोऽभिवर्तते.

कञ्चुकी– [सप्रश्रयम्] भगवन्! तत्र प्रमाणं भगवानेव महेश्वरमुकुटालङ्कारः।

तथा हि–

विभ्रद्वैकर्ण[2]नविलयतो[3] हृत्प्रकाशप्रकर्षं

द्रौपद्येवास्तमिततमसा पौरुहूत्या प्रपन्नः।

सम्पूर्णाशा प्रसृमरमहाशोभया जृम्भमानः

प्रीतिं धर्मात्मज इव मुधा सिन्धुरुच्चैस्तनोति ॥ 30 ॥

[उभौ सानुमोदं परिक्रामतः]

श्रीकृष्णः– [सादरं धनञ्जयमुखमवलोक्य सस्मितम्] सखे!

---

1. ०ण्ठया प्रस्थितस्य, ख।
2. ०र्त्त०,ख।
3. न, क।

मन्ये तमश्चयतिरस्करिणीमुदस्य
पौरन्दरी हिमकराननमुन्नमय्य।
साङ्ग्रामिकीं श्रियमुपास्य विलक्षणन्ते
वक्त्रं निभालयति नायकनन्दनस्य॥ 31॥

धनञ्जयः– भगवन्! भवदनुगृहीतः सर्वैरेवानुगृह्यते। [इत्युभौ परिक्रामतः।]

राजा– प्रिये पाञ्चालि! माङ्गल्य-गीतवादित्रादिध्वनयः सविधमनुसरन्तो निवेदयन्ति नेदीयांसौ कंसारि-कर्णकीनाशौ।

द्रौपदी– एवणेदम्। छाया–(एवन्विदम्।)

[नेपथ्याभिमुखमवलोक्य] मञ्जुभाषिणि!, मञ्जुभाषिणि!

मञ्जुभाषिणी– [प्रविश्य सत्वरं निर्मज्जनसामग्रीहस्ता।] भट्टिणि! इअह्मि आणवेदु।

छाया–(भट्टिनि! इयमस्मि आज्ञापयतु।]

द्रौपदी– कधं दे विलम्बो[1]? छाया–(कथं ते विलम्बः?)

मञ्जुभाषिणी– सव्वासं अन्तेउरणारीणं मङ्गलाअरणकोदूहलोवि अणाअणसमुच्छुआ[2] क्खणं त्थिदह्मि।

छाया–(सर्वासां अन्तःपुरनारीणां मङ्गलाचरणकौतूहलोऽपि आगमनसमुत्सुसका क्षणं खेदिताऽस्मि।)

कञ्चुकी– [किञ्चित् पुरो गत्वा] भगवन्! एष सरस्तीरमणिमण्डपपुरः शातकुम्भवेदिकायां[3] देव्या यजनवेदिजातया सह युवयोर्दर्शनमपेक्षते महाराजः।

श्रीकृष्णः– [दृष्टवा सहर्षम्] सखे सव्यशाचिन्! पश्य, पश्य–

---

1. विमुअ, ग।
2. तत्थपन्थि दोक्षि, क।
3. शातकुम्भः सुवर्णमित्यमरः।

**उडुभिर्नभसि नितान्तं वसुन्धरायां प्रदीपसन्तानैः।**

**राजा राजेति-युगपच्छोभनशोभासमुज्वलितः॥ 32॥**

[इत्युभौ[1] सत्वरमुपक्रामतः]

**राजा–** [तावुभौ समालोक्य सहर्षातिशयम्] देवि द्रुपदराजनन्दिनि! अयमयं भगवान् पन्नगराजकेतुः, श्रीमान् प्लवगराजकेतुश्च। पश्य, पश्य–

**न तथा शीतमयूखः सुखयति नेत्रे[2] सुधाकरवर्षैः।**

**मन्दस्मितमधुरास्यौ यादवजिष्णू[3] यथास्माकम्॥ 33॥**

[इति[4] द्रौपद्या सह पुरः परिक्रामति।]

**श्रीकृष्ण-धनञ्जयौ–**[सत्वरमुपगम्य राज्ञः पादौ स्पृष्ट्वा]

विजयताम्, विजयताम्, अप्रतिहताज्ञो महाराजः।

**राजा–** [ससम्भ्रममुत्थाप्य तौ निर्भरमालिङ्ग्य च]

भगवन् श्रीकृष्ण! वत्स विजय! प्रागेव मया निवेदितम्।

['**दृष्ट्वा वां मुदमातनोतु मघवा**' इत्यादि पुनः पठति।]

[अथ यथोचितं विचित्रासने सर्वे उपविशन्ति।]

**राजा–** [धनञ्जयं निर्वर्ण्य] वत्स! कथं किरीटशून्योऽसि?

**श्रीकृष्णः–** महाराज! यद्विषधरमहास्त्रादश्रान्तमुद्विजिता वयंमास्म, तदस्त्रेण किरीट एव कुन्त्याप्तम्।

**राजा–** [किञ्चित् सामर्षम्] अये कर्ण! साप्तपदीन् सम्पादने भवानेव पुरस्तादगणनीयः।

---

1. परिक्रामतः, ख।
2. नोऽत्र, क।
3. ०ष्णु, क।
4. 'क' मातृकायां नास्ति।

यदमरदनुजाभिर्नसाध्यं[1]

तदपि कृतं भवता रणाङ्गणेऽस्मिन्।

अपि तनुमपहाय मानसं मे

व्यथयति मैत्रकृते सुयोधनस्य॥ 34॥

[इति स्वशीर्षान्मुकुटमुत्तार्य धनञ्जयमूर्ध्नि निधापयति।]

श्रीकृष्णः– [हस्तसंज्ञया मुकुटान्तराहरणाय कञ्चुकिनं निर्दिशति।]

कञ्चुकी– [निष्क्रान्तः।]

धनञ्जयः– [सविनयमौलिस्तत्प्रतिगृह्य समुत्थाय पार्थिवस्य पादयोः पतति।]

राजा– [सस्नेहातिशयं समुत्थाप्य परिष्वजते।]

श्रीकृष्णः– सखे सव्यशाचिन्। साम्प्रतमेव महाराजस्य प्रसादग्रहण[2]योग्यसम्प्रदानमसि।

[इत्युत्थाय परस्परं करतलस्पर्शपूर्वकं निर्मरमाश्लिष्य यथास्थानमुपविशतः।] [श्रीकृष्णः सम्भ्रमावनतोपस्थित[3]:, कञ्चुकिहस्तानन्मुकुटमादाय राजानमलङ्करोति।]

द्रौपदी– [चेटीहस्तान्निर्म[4]ञ्चनसामग्रीमादाय ससम्भ्रमावनतशीर्षयोः श्रीकृष्ण[5]-धनञ्जययोर्निर्मञ्चनमुपकल्प्य[6] दूर्वादिकं शिरसि समर्प्य राजान्तिक[7]-मुपविशति।]

---

1. ०म०, ग।
2. 'क' मातृकायां 'ग्रहण' पदं नास्ति।
3. 'ग' मातृकायामधिकः पाठः।
4. ०र्ज्ज०, क।
5. ०ष्णार्जुनयोः, ख।
6. माकल्प्य, ख।
7. नृपा, ख।

राजा— भगवन्! सावयवं श्रोतुमिच्छामि निधनं राधेयस्य।

श्रीकृष्णः— महाराज! स तावद् भवन्मन्युनैव निपातितः, न पुनस्तत्र कारणान्तरं किञ्चित्।

धनञ्जयः— महाराज! भवत्प्रसादः श्रीकृष्णानुग्रश्च द्वयमेव साधनन्तत्र, न पुनरन्यत्।

राजा— भगवन्! अदृष्टमपि तादृगभीष्टफलं भवद्वदनारविन्दवचनविन्यासतः प्रत्यक्षीकृतमिवानुभवितुमुत्कण्ठितोऽस्मि।

श्रीकृष्णः— महाराज! बहुवासरैरपि तद्विशेषेण व्याहर्त्तुमनीशस्तथापि भवन्निदेशात् संक्षेपतः किञ्चिन्निवेदयामि—

[1]पारीन्द्रेण यथा गिरीन्द्रशिखराद् द्राक्पातयित्वा द्विपं
विक्रान्तं समकारि शाणितनखैरुद्घाटितं मस्तकम्।
शौटीर्यादवतार्य शौर्यनियतं कर्णं तथा स्यन्दनात्
पार्थेनाञ्जलिना प्रहारवलिना च्छिन्नं शिरः सङ्गरे॥ 35॥

राजा— [आनन्दातिशयमभिनयन्]

प्रस्तौमि किं वचनवैभवमस्ति किं मे
तत्राति[2]हर्षजडताश्रयतीन्द्रियाणि।
एतत्तु वेद्मि विजयस्य समानधर्मा
नान्यस्त्वमेवजगदीश्वर यस्य यन्ता॥ 36॥

प्रतीहारः— [प्रविश्य] [दूरे स्थित्वा उच्चैः]

आर्य प्रियम्बद! प्रियम्बद!

कञ्चुकी— [श्रुत्वा तदन्तिकमागत्य] कथमाहूतः?

---

1. पारेस्त्रेण, क।
2. ०पि, ख।

प्रतीहारः— भीमसेन-नकुल-सहदेव-सात्यकि-धृष्टद्युम्न-शिखण्ड-द्रौपदेयादिभि-रध्यवसिताः पुरद्वारभूमयः।

कञ्चुकी— [नृपान्तिकं गत्वा साञ्जलिस्तथैव निवेदयति।]

राजा— [सहर्षम्] प्रियम्वद! सत्वरं गत्वा तानत्र[1] प्रवेशयोग्यान् समानय। सर्वे सम्भूय परमानन्दसन्दोहमनुमवामः।

कञ्चुकी— यथाज्ञापयति देवः। [इति प्रतीहारेण सह निष्क्रान्तः]

श्रीकृष्णः— देवि द्रुपदराजनन्दिनि!

**येन भ्रातृवशेन केश-वसने स्पृष्टे भवत्याः पुरा**
**तद्वक्षः क्षरदस्त्रसाधुमधुभिः पूर्णोदरः क्षीरधिः।**
**शोणाक्षः प्रतिपक्षपाणियुगलस्तीर्णप्रतिज्ञोऽधुना**
**वेणीं संयमितां चिरस्य मलिनां भीमोऽयमामोक्ष्यति॥ 37॥**

राजा— [सहर्षम्] स चापि निन्दितकर्मा निहतः?

श्रीकृष्णः— महाराज! वृषसेनोऽपि पितुः पार्ष्णिग्राहः सम्प्रति सव्यशाचिना पुरस्सरः सम्पादितः।

राजा— [सानुमोदम्] भगवन्! किञ्चिदभीष्टमपि नावशिष्टमस्ति?

द्रौपदी— [वेणीं गृहीत्वा विलोक्य च हर्षाश्रुभिः स्नपयति।]

[ततः प्रविश्य कञ्चुकिनादिष्टवर्त्मानो भीमादयो राजानं चरणे स्पृष्ट्वा] जयति, जयति निःशेषितशङ्कनीयशास्त्रवः सर्व[2]नरेन्द्रसार्वभौमः।

राजा— [तान् सर्वान् यथायोग्यं प्रत्यभिनन्द्य] वत्स वृकोदर! चिररात्राय तीव्रव्रत-धारिण्या याज्ञसेन्या वेणीबन्धमधुनैव दुःशासनशोणितस्निग्धपाणिना परि-मोचयतु[3] भवान्।

---

1. ०पि, क।
2. ०र्वे, ख।
3. मुच्यताम्, क।

**भीमसेनः**– यथाज्ञापयति महाराजः। [इति देव्याः वेणीबन्धमुद्घाट्य कृष्णार्जुनाभ्याम-भिनन्दितः सर्वैः सह यथास्थानमुपविशति[1]।]

**राजा**– भगवन् श्रीकृष्ण! अद्यैव द्रौपद्याः कबरीभारः परिष्कारं प्रपद्यताम्, ममापि[2] लोचनद्वन्द्वं निद्रां सुचिरमुज्झिताम्।

**श्रीकृष्णः**– एवमेव महाराज! भवदीय धर्मधरणीरुहस्य फलमेतत् परितः परिस्पन्दते।

[अथ साञ्जलयो धृष्टद्युम्न-सात्यकि-शिखण्डयः राजानं प्रति]– महीमहनीयमहिम्ना महाराजमण्डलीमुकुटमाणिक्य[3]!

धर्मो यत्प्रभवास्पदं त्रिजगतामाराध्य पादाम्बुजः
साचिव्यं वितनोति यस्य भगवान् क्रीडावतीर्णो हरिः।
एते यस्य भुजप्रतापमसृणीभूतत्रिलोकीभटाः[4]
सोदर्याः भुवने भवादृगपरः[5] कः स्याद् धरित्रीश्वरः?॥ 38॥

**राजा**– भगवतः श्रीकृष्णस्य प्रसादाद् भवद्विधानामेवम्बिधेनानुग्रहेण निगृहीत-शात्रवास्तादृग्व्यसनपारावारपारम्प्राप्तवन्तो वयम् वर्तामहे।

[कञ्चुकिनं प्रति] प्रियम्वद, प्रियम्वद! मलयजमाल्यपुष्पताम्बूलानि[6] सत्वरमुपाहृयन्ताम्।

**कञ्चुकी**– [तदनाकर्ण्य[7] तथैव स्थितः।]

---

1. ॰न्ति, क।
2. ॰या॰, क।
3. मुकुटमण्डली, ख।
4. सदृशी, ख।
5. ॰रम्, क।
6. मलयजपुष्पाणि, क।
7. एतदा॰ क।

सर्वे– [सत्वरम्] प्रियम्वद प्रियम्बद! महाराजस्त्वामाज्ञापयति।

कञ्चुकी– [ससम्भ्रमं राजान्तिकं गत्वा लगुडं सन्त्यज्य सविनयम्]

अयं बटुकः।[1] किमाज्ञापयति महाराजः?

द्रौपदी– मलअजमाला-पुष्पताम्बूलाइं ज्झत्ति उवाणेहित्ति महाराएण जाणत्तम्।[2] अ:ए ण आअण्णिदम्।[3]

छाया–(मलयजमाला-पुष्पताम्बूलानि झटिति उपाहर इति महाराजेन आज्ञप्तम्। अये! न आकर्णितम्?

राजा– [सस्मितम्] प्रियम्वदस्तावद् वृद्धावस्थां विशेषेण विस्तारयति।[4]

कञ्चुकी– [सलज्जम्] महाराज! न केवलं तस्यावरोधः। तथाहि–

आतोद्यध्वानमिश्रैः श्रुतिसुखशुभाशीर्वचोभिर्द्विजानां
व्याप्तं व्योमावरोधः प्रचलितरसना-निःश्वनैः सुन्दरीणाम्।
पृथ्वी-वारङ्गनानां चलचरणतुलाकोटि-कोटिप्रणादै-
रस्मिन् वाधिर्य-दोषः समधिकवयसां केवलं न[5] क्षितीशः ॥39॥

[इति त्वरया निष्क्रान्तः]

श्रीकृष्णः– महाराज! सम्यगभिहितं प्रियम्वदेन। तादृश एव महोत्सवः परिप्राप्तः, अपरमप्यवधीयताम्:–

---

1. अयमहं, ग
2. अन्तरेण स्सुदम्, ख।
3. 'ख' मातृकायां वाक्यमिदं नास्ति।
4. प्रकटयति, क।
5. निक्षितीशः, ख।

श्रूयन्ते[1] दिवि देवदुन्दुभिघनध्वानस्वरूपाश्रया

नृत्यन्निर्जरनीरजातनयना मञ्जीरमञ्जुस्वनाः।

निश्छिद्रं निपतद्भिरम्बरतलात्सन्तानपुष्पोत्करै-

रानन्दाश्रुविमिश्रितैः सुरपतेराकीर्य्यते भूतलम्॥ 40॥

[सर्वे हर्षातिशयमभिनयन्ति।]

कञ्चुकी— [ततः प्रविश्य] [सुवर्णसूत्ररचितविचित्राच्छादनवन्ति मलयजमाल्यपुष्प-[2] पात्राण्युपानयति।]

राजा— प्रियम्वद! भवतः पुरस्तादाधीयन्ताम्।

कञ्चुकी— [तथा करोति।]

श्रीकृष्णः— [स्वहस्तेन पात्रमादाय राजान्तिकं गत्वा गन्धादिभिर्विभूषितेन राज्ञा भूषितः। ततः सम्भ्रान्तोपनतान् सर्वान् भगवान् स्वहस्तेनैव [3]गन्धादिभिर्भूषयाञ्चक्रे। ततः सर्वे राजप्रणामपूर्वकं [4]कर्पूरचूर्णपरिपूर्णानि जगृहुस्ताम्बूलानि च]

[नेपथ्ये वैतालिकाः]—

नृत्यन्त्यस्ताःश्रमपरिगताः सन्ति सर्वाः समन्ताद्

विद्याधर्यो नभसि नितरां भूतले वारनार्यः।

एतच्चित्रं क्षितिप! तव यद्यौगपद्यप्रयत्ना-

दश्रान्तैका दिशि दिशि नरीनृत्यते कीर्त्तिरामाः॥ 41॥

---

1. ०नानु, ख।
2. पुष्पाण्यु० क।
3. 'क' मातृकायां नास्ति।
4. चूर्णानि, क।

अपि च–

देव! त्वद्विद्विषतां कुकीर्त्तितमसा विश्वे निगीर्णे कथं
प्रागल्भ्यादभविष्यदिन्द्रियवतां सद्वर्त्मसंवीक्षणम्।
यस्याशा[1]परिपूर्त्तिकान्तिविशद[2]ब्रह्माण्डभाण्डोदरं
नोद[3]च्यज्जगती महेन्द्र! भवतः पूर्णो यशश्चन्द्रमाः ॥ 42 ॥

श्रीकृष्णः– [चन्द्रमवलोकयन्] अये! मस्तकोपरि विजयते यामिनीजानिः? तन्महाराजसान्निध्यं महोत्सवेन घटिकार्द्धमिव घटितार्द्धरात्रं राजाभिमुखम्। तदिदानीम्–

क्रा[4]न्ता कौतुकिनः सुराः स्वनगरं क्रीडन्तु कान्तावृताः
श्रान्तास्ते नट-नर्त्तका विदधतु क्लेशोपशान्तिक्रियाम्।
सन्ना[5]हं परिमुच्य वीरपुरुषाः सन्तु प्रशान्तश्रमाः
विश्रामं नृवरोऽपि रत्नभवने प्राप्नोतु दे[6]व्यः स्वयम्॥ 43 ॥

राजा– यदभि[7]रोचते यादवकुल[8]मणये। [इति सेर्वे उत्तिष्ठन्ति।]

राजा– प्रियम्वद! सर्वान् नट-नर्त्तकान् प्रभूतपारितोषिकैरभिनन्दयिष्यति भवान्।

---

1. ०द्या, ख।
2. ०ष, क।
3. ०देश्य, ख।
4. न्त्वा, ख।
5. मो, क।
6. व्या, ख।
7. रुचितं, क।
8. ०कमलाय, क।

कञ्चुकी– [राज्ञः पुरस्तादञ्जलिं बद्ध्वा धनञ्जयं निर्दिशन्]

महाराज! भवता निक्षिप्तोऽयं निक्षेपः प्रतिहतविघ्नो मया प्रत्यर्पितः तदाज्ञापय भूयः किं ते प्रियमुपकरोमि?

राजा– भगवन्! युधिष्ठिरैकशरण! किमतःपरं प्रियमस्ति :–

आजन्मप्रतिकूलतां प्रथितयन् दुर्योधनः साम्प्रतं
प्रत्याशा-तरिमभङ्ग[1]निश्चितमृतिः शोकार्णवे मज्जितः।
विख्यातो विजयः क्षितौ समजनि प्रौढप्रतीपक्षया-
दद्यैव द्विरदाह्वयो[1]ऽस्मि भवता भद्रासने स्थापितः॥ 44॥

तथापीदमस्तु–

लक्ष्मीन[2]द्धनरेन्द्रनिर्मलनयैर्निर्मूलितोपप्लवा
स्त्रैणस्तेन कृतघ्नदुर्जनशठैः शून्यास्तु सर्वंसहा।
अश्रान्तं[3] श्रुति-सत्प्रसङ्गवचनैराविद्य-विध्वंसना-
च्चितं चन्द्रकलाकिरीटचरणे स्थेयात् स्थिरं मादृशः॥ 4

अपि च–

ईदृक् काव्यप्रणेतुः प्रतिहतरिपवः सन्तु गोत्रप्रसूताः
श्रोतॄणां पश्यताञ्च प्रथयतु परमामूर्द्धिनमर्द्धेन्दुचूडः।

---

०न्ध, क।
लब्ध, क।
भुवि, ख।

भूयात्कीर्त्तिर्धनाप्तिर्दृढमभिनयतां प्रत्यहं नर्त्तकाना-

माकल्पान्तं प्रबन्धः स्फुरतु कृतधियां कौमुदीवाननेन्दौ ॥ 46 ॥

सर्वे— एवमस्त्विति [निष्क्रान्ताः]

इतिश्री श्रीयुत् लक्ष्मणमाणिक्यदेवविरचिते

'विख्यातविजयं' नाम नाटके

'परममहोत्सवो' नाम

षष्ठोऽङ्कः सम्पूर्णः ॥

॥ श्रीदुर्गा ॥